स्मृत्यर्थसारकर्ता श्रीधराचार्योऽपि कन्दलीकाराद्भिन्न एव । तत्पितृनामभेदात् । तदुक्तं स्मृत्यर्थसारान्ते ।

इदं स्मृत्यर्थसारं हि स्थूलस्मरणहेतुना ।
नावमान्यं सर्वं मूलं पश्यन्त्येव बहुश्रुताः ॥
स्मृत्यर्थसाराख्यं नागविष्णवार्यासूनुयज्वना ।
श्रीधराचार्येण स्मृतिविदा कृतं हि विष्णु*** ॥

श्रीकराचार्यश्रीपत्यादयस्तु नामत एव भिन्नाः प्रतीयन्ते किं पुनर्विषयभेदप्रदर्शनेनेत्यलं पल्लवितेन ॥

---

## साङ्केतिकचिह्नविवरणम् ।

पा. १ पु. ।—पाठोऽयं प्रथमपुस्तके ।

पा. १ । २ पु. ।—पाठोऽयं प्रथमद्वितीयपुस्तकयोः ।

पा. १ । २ । ३ पु. ।—पाठोऽयं प्रथमद्वितीयतृतीयपुस्तकेषु । एवमग्रेऽपि ॥

मूले १ पृ. २ पं. ।—मया एकैकस्य पदार्थस्य निरूपणमेकैकलेखविभागे विन्यस्तम् तथैव टीकापि विभक्ता इति मूलेन टीकायाः संयोजनार्थमस्याष्टीकाया मूले प्रथमपृष्ठे द्वितीयपङ्क्तौ योगः कार्यः । एवमग्रेऽपि ॥

१ अ. १ आ. १ सू. ।—प्रथमाध्याये प्रथमाह्निके प्रथमसूत्रम् । एवमग्रेऽपि ॥

१ अ. १ पा. १ सू. ।—प्रथमाध्याये प्रथमपादे प्रथमसूत्रम् । एवमग्रेऽपि ॥

ब. सं. सी. मु. पु. ।—बनारससंस्कृतसीरीजमुद्रितपुस्तके ॥

संवत् १९५० आषाढकृष्ण ५
वाराणसीस्थराजकीयसंस्कृतपाठशालायाम्
पुस्तकालये ।

विन्ध्येश्वरीप्रसादशर्मा
द्विवेदोपाख्यः ।

॥ श्रीः ॥

# अथ कणादसूत्रप्रशस्तपादभाष्ययोः सम्बन्धस्य सूचीपत्त्रम्* ।

## उद्देशप्रकरणे ।

| पृष्ठे—पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| १—३ । ४ … | प्रणम्य-महोदयः … | अ॰ १ आ॰ १ सू॰ १ (क) |
| ६—१४ । १५ … | द्रव्य-हेतुः | अ॰ १ आ॰ १ सू॰ १ । २ । ३ । ४ । (ख) |
| ७—१४ … | तत्त्वे-देव | |
| ८—७ । ८ । ९ । १० । ११ | अथ-नभिधानात् … | अ॰ १ आ॰ १ सू॰ ५ † |
| १०—११ । १२ । १३ । १४ । १५ | गुणाः-चतुर्विंशतिर्गुणाः | अ॰ १ आ॰ १ सू॰ ६ |
| ११—३ । ४ । ५ । ६ | उत्क्षे-जात्यन्तराणि … | अ॰ १ आ॰ १ सू॰ ७ |
| ११—१२ । १३ । १४ । १५ । १६ | सामान्यं-लभन्ते … | अ॰ १ आ॰ २ सू॰ ३ । ४ (ग) । ५ |
| १३—२० । २१ … | नित्य-त्वाद्विशेषा एव | अ॰ १ आ॰ २ सू॰ ६ |
| १४—७ । ८ … | अयुत-समवायः … | अ॰ ७ आ॰ २ सू॰ २६ |
| १५—२० … | एवं-कृतः | |

## साधर्म्यवैधर्म्यनिरूपणे ।

| पृष्ठे—पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| १६—१ । २ … | षण्णा-त्वानि | |

---

* अस्मिन् सूचीपत्त्रे यावद्यावद्भाष्यस्य मूलानि यानि यानि सूत्राणि तानि संख्याद्वारा प्रकाशितानि। यथा अस्मिन्नेव पृष्ठे ऽष्टमपङ्क्तौ निर्दिष्टम् ७–१४ तत्त्वे-देव अर्थात् सप्तमपृष्ठे चतुर्दशपङ्क्तिस्थस्य 'तत्त्वेश्वरचोदनाभिव्यक्ताद्धर्मादेव'–इति भाष्यस्य मूलं अ॰ १ आ॰ १ सू॰ ४ प्रथमाध्याये प्रथमे आह्निके चतुर्थं सूत्रमनेनैव क्रमेण सर्वत्रानुसन्धेयम् ॥

(क) एतेन सौत्रमप्यतःपदं व्याख्यातं स्यादिति किरणावलीकृतः ।

(ख) एतेन अथातो धर्मं व्याख्यास्यामः । यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः । तद्वचनादाम्नायप्रामाण्यमिति त्रिसूत्री व्याख्यातेति किरणावलीकृतः ।

† अ॰ ५ आ॰ २ सू॰ १९ । २० तमसो द्रव्यान्तरत्वखण्डने द्वे सूत्रे भाष्यकृता न व्याख्याते ।

(ग) भावः सत्ता इति व्याख्यातं विवृतिकृदुपस्कारकृद्भ्याम् ।

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| १६—९ … … | आश्रितत्वं-द्रव्येभ्यः | |
| १६—१८ … … | द्रव्यादीनां-नेकत्वं च | |
| १६—२३ … … | गुणादीनां-निष्क्रियत्वे | अ॰१ आ॰१ सू॰१६।१७(क)। अ॰१ आ॰ २ सू॰९(ख)। अ॰७ आ॰१ सू॰१५। |
| १७—५।६।७ … | द्रव्यादीनां-कर्तृत्वं च | अ॰ १ आ॰ १ सू॰ ८। अ॰ ८ आ॰ २ सू॰ ३। अ॰ १ आ॰ २ सू॰ ७ |
| १७—२६ … | …कार्य्यत्वानित्यत्वे कार॰ णवतामेव | |
| १८—१२ … … | कारणत्वं-दिभ्यः | |
| १८—१९ … … | द्रव्या-द्रव्येभ्यः | |
| १९—१।२।३ | सामान्या-चेति … | अ॰१ आ॰ २ सू॰ १०।१२।१४। १६।३। अ॰७ आ॰२ सू॰ २६(ग) |
| २०—१४।१५।१६ | पृथिव्यादी-विशेषवत्त्वम् | अ॰ १ आ॰ १ सू॰ ९।१०।१२।१५। १८(घ)।५। अ॰ १० आ॰ २ सू॰ १।२।(ङ) |
| २१—११ … … | अनाश्रितत्व-द्रव्येभ्यः | |
| २१—१६।१७ … | पृथिव्यु-जातिमत्त्वे | |
| २१—२१।२२ … | क्षिति-वेगवत्त्वानि … | अ॰ ५ आ॰ २ सू॰ १।२।३।४। ५।६।७।१२।१३।१४। अ॰ ५ आ॰ १ सू॰ १७। अ॰ ७ आ॰ २ सू॰ २१(च) |

---

(क) सूत्रस्थमगुणवानितिपदमगुणमितिपदं च व्याख्यातमनेन भाष्यग्रन्थेन।

(ख) सत्ताया गुणकर्मव्यतिरिक्तत्वं प्रतिपादयतीदं सूत्रम् अत्र हि गुणकर्म्मसु च भावादिति उक्तं तेनैव हेतुना गुणकर्माभावो गुणकर्म्मसु वर्त्तत इति सूत्राभिप्रायो गम्यते।

(ग) बुद्धिसापेक्षत्वकथनात् व्याख्यातम्।

(घ) स्वात्मन्यारम्भकत्वमितिकथनात् व्याख्यातम्।

(ङ) न केवलं द्रव्यस्य समवायिकारणत्वं कार्यसमवायितया किन्तु असमवायिकारणाश्रय-तयापि इत्यवतारणिका विवृतिकृताम्। निमित्तकारणत्वमपि द्रव्यस्येत्यभिप्राय उपस्कारकाराणाम्। उभयमते एव द्रव्यस्य संयोगद्वारा स्वात्मन्यारम्भकत्वमविशिष्टम्।

(च) यद्यपि पञ्चमाध्यायप्रथमाह्निके बहूनि सूत्राणि इस्तादौ कर्मणः प्रतिपादकानि वर्तन्ते तथापि पृथिव्यादिनाम्ना तेषां सूत्रेऽकीर्त्तनात् नात्र निवेशितानि तानीति।

(क) परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययकारणे द्रव्ये काल इति समाख्या न तादृशः प्रत्ययः सद्देशवृत्त्यसाधारणः कालस्य व्यापकतामन्तरेण सम्भवतीति उपस्कारकृतः । युगपदादिप्रत्ययानां कारणं कालाख्या कालसंज्ञा इति सूत्रार्थः तेन व्यापकः कालो लभ्यते युगपदादिप्रत्ययानां सर्वत्र भावादिति कन्दलीकृतः कारणे काल इति उपस्कारविवृतिसम्मतः पाठः । कारणे कालाख्येति कन्दलीकारसम्मतः ।

(ख) द्रव्यसाधर्म्यकथने कार्य्यकारणाविरोधित्वकथनात् अत्र तदितरेषां वैधर्म्यकथनं सूत्रयोः सामान्यरूपेण व्याख्यानं बोध्यम् । एवमग्रेऽपि बोध्यम् । उभयथा गुणाः कार्य्यबध्याः कारणबध्याश्चेत्यर्थ इत्युपस्कारकृतः ।

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| | **पृथिवीनिरूपणे*** | |
| २७—९ । १० । ११ । १२ । १३ । १४ | पृथिवीत्वा-संस्कारः | अ॰ २ आ॰ १ सू॰ १ । ६ । अ॰ ४ आ॰ १ सू॰ ११ । अ॰ ५ आ॰ १ सू॰ १६ (क) । १७ । १८ । ७ । अ॰ २ आ॰ २ सू॰ २ अ॰ ५ आ॰ २ सू॰ १ |
| २७—१५ … … | क्षिताविव गन्धः … | अ॰ २ आ॰ २ सू॰ १ (ख) । २ |
| २७—१५ । १६ … | रूपमनेक-रसुरभिश्च | |
| २७—१७ … … | स्पर्शा-पाकजः … | अ॰ ७ आ॰ १ सू॰ ६ (ग) |
| २७—१७ । १८ । १९ । २० । २१ | सा तु-करी च … | अ॰ ४ आ॰ १ सू॰ १ (घ) । २ । ३ । ४ (ङ) ५ । अ॰ ७ आ॰ १ सू॰ २० (च) । २१ |
| २७—२१ । २२ … | त्रिविधं-संज्ञकम् … | अ॰ ४ आ॰ २ सू॰ १ । |
| २७—२२ । २३ … | शरीरं-मयोनिजं च … | अ॰ ४ आ॰ २ सू॰ ५ |
| २७—२३ … … २८—१ । २ । ३ । ४ । ५ | तत्रायोनिज-णा-मण्डजम् … | अ॰ ४ आ॰ २ सू॰ ६ । ७ । ८ । ९ । ११ । १० (छ) । |
| २८—६ । ७ … | इन्द्रियं-घ्राणम् … | अ॰ ८ आ॰ २ सू॰ ५ |
| २८—७ । ८ । ९ । १० । ११ | विषयस्तु-इति | अ॰ ४ आ॰ २ सू॰ १ (ज) |

* अ॰ ४ आ॰ २ सू॰ २ । ३ । ४ । अ॰ ८ आ॰ २ सू॰ ४ शरीरस्य पञ्चात्मकत्वत्र्यात्मकत्वप्रतिषेधपराणि सूत्राणि । अ॰ १० आ॰ १ सू॰ ७ । शरीरतदवयवयोः परस्परभेदं प्रतिपादयतीदं सूत्रम् । एतानि भाष्यकृता न व्याख्यातानि ।

(क) यथोत्तरकर्मकथनात् संस्कारः सिद्धः तथैव संयोगानामयौगपद्यात् नानाकर्मेति कथनात् संयोगोऽपि । एवमग्रेऽपि यथासम्भवमूहनीयम् ।

(ख) गन्धादयो यत्र कारणगुणक्रमेणोत्पद्यन्ते तत्र स्वाभाविकाः न हि समीरणे उपलभ्यमानो गन्धः समीरणस्येति पुष्पवस्त्रयोः सन्निकर्षेऽपि अयं गन्धो न वस्त्रस्य स्वाभाविकः तस्य कारणगुणाजन्यत्वात् तथा च एवकारेण व्याख्यातं सूत्रम् ।

(ग) रूपरसगन्धस्पर्शा इत्युपस्कारकारविवृत्तिकारौ ।

(घ) नित्यसामान्यलक्षणपरं सूत्रमित्युपस्काराभिमतिः । परं तु विवृतिकृता भावरूपं किञ्चिदकारणवदजन्यं नित्यं विनाशाप्रतियोगि वस्तु अवयविनां मूलकारणमिति व्याख्यातम् । एवं जलनिरूपणादावपि बोध्यम् ।

(ङ) न नित्यः अनित्य इतिप्रतिषेधो नित्यं विना न सम्भवतीत्यर्थः सूत्रस्य तेन नित्यः परमाणुरस्तीति गम्यते परमाणुप्रस्तावे कथितत्वात् । एवमग्रेपि ।

(च) यद्यपि परिमण्डलं पारिमाण्डल्यमिति उपस्कारकृन्मते संज्ञामात्रपरमिदं सूत्रं तथापि पारिमाण्डल्यविशिष्टं परमाणुरूपं द्रव्यं नित्यमिति न नित्यद्रव्यस्य दुर्भिद्यता इति विवृतिकृता व्याख्यातम् ।

(छ) अयोनिजशरीरे प्रमाणानि दर्शयन्त्येतानि सूत्राणि । तथा च सामान्यरूपेण व्याख्यानमिदं भाष्यमिति ध्येयम् ।

(ज) विषयपदस्य सूत्रस्यस्य व्याख्यैवात्रस्थं भाष्यम् ।

## जलनिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| ३५—२२ । २३ । २४<br>३६—१ । २ | अपस्त्वा—द्रवत्वम् … | अ॰ २ आ॰ १ सू॰ २ । अ॰ ४ आ॰ १ सू॰ ११ । अ॰ २ आ॰ २ सू॰ ५ । अ॰ ५ आ॰ १ सू॰ १७ । अ॰ ५ आ॰ २ सू॰ ३ । ४ । ५ । ६ । ८ । ११[क] |
| ३६—२ । ३ । ४ । ५ | ताश्च—समर्थम् … | अ॰ ४ आ॰ १ सू॰ १ । २ । ३ । ४ । ५ । अ॰ ४ आ॰ २ सू॰ १ । ६ । ७ । ८ । ९ । १० । ११ । अ॰ ७ आ॰ १ सू॰ २० । २१ |
| ३६—५ । ६ । ७ | इन्द्रियं—रसनम् | अ॰ ८ आ॰ २ सू॰ ६ |
| ३६—७ । ८ … | विषयस्तु—करकादिः | अ॰ ५ आ॰ २ सू॰ ८[ख] । अ॰ ४ आ॰ २ सू॰ १[ग] |

## तेजोनिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| ३८—२४ । २५<br>३९—१ । २ | तेजस्त्वा—एव स्पर्शः … | अ॰ २ आ॰ १ सू॰ ३ । ७ । अ॰ ४ आ॰ १ सू॰ ११ । अ॰ ५ आ॰ २ सू॰ ८[घ] । अ॰ २ आ॰ २ सू॰ ४ । अ॰ ५ आ॰ १ सू॰ १७ |
| ३९—२ । ३ … | तदपि—त्रयम् … … | अ॰ ४ आ॰ १ सू॰ १ । २ । ३ । ४ । ५ । अ॰ ७ आ॰ १ सू॰ २० । २१[ङ] अ॰ ४ आ॰ २ सू॰ १ । |
| ३९—३ । ४ … | शरीर—समर्थम् … | अ॰ ४ आ॰ २ सू॰ ६ । ७ । ८ । ९ । १० । ११ |
| ३९—४ । ५ । ६ | इन्द्रियं—चक्षुः … | अ॰ ८ आ॰ २ सू॰ ६ |
| ३९—६ । ७ …<br>३९—७ । ८ …<br>३९—८ । ९ । १० । ११ | विषय—करलं च<br>तच्च भौमं—स्वभावं<br>पचन—रिति … | अ॰ ४ आ॰ २ सू॰ १<br>अ॰ ५ आ॰ २ सू॰ १३[छ] |

(क) पूर्व्ववदेतेषां सूत्राणां जले संयोगवत्त्वे प्रमाणता बोध्या ।
(ख) करकाद्युत्पत्तौ हेतुं प्रतिपादयदिदं सूत्रं करकाया जलत्वे प्रमाणम् ।
(ग) सामान्यतोऽभिधीयमानस्य सूत्रस्य विशेषतो व्याख्या अत्रत्यभाष्यपङ्क्तिः । एवमग्रेऽपि ।
(घ) इदं तु तेजसि संयोगवत्त्वे मानं पूर्व्वरीत्या बोध्यम् ।
(ङ) नित्यपृथिव्यादिसद्भावे युक्तिप्रदर्शनपरमिदं सूत्रमिति विवृतिकृतः । पूर्वत्राप्येवम् ।
(छ) ऊर्द्धज्वलनस्वभावस्यकथनात्तेजसः ऊर्द्धज्वलनमदृष्टकारितमिति सूचितं भाष्यकृता ।

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| | **वायुनिरूपणे*** | |
| ४४—१।२।३।४।५ | वायुत्वा——वचनात् संस्कारः | अ· २ आ· १ सू· ४। अ· ४ आ· १ सू· १२(क)। अ· ५ आ· १ सू· १४(ख) |
| ४४—५।६।७ | स चायं-प्राण इति··· | अ· ४ आ· १ सू· १।२।३।४।५। अ·२आ·१सू·११।१२।१३(ग)। अ· ४ आ· २ सू· १।(घ) अ· ७ आ· १ सू· २०। २१ |
| ४४—७।८ ··· | तत्रा-समर्थम् ··· | अ· ४ आ· २ सू· ६। ७। ८। ९। १०। ११ |
| ४४—८। ९। १० | इन्द्रियं-त्वगिन्द्रियम् | अ· ८ आ· २ सू· ६ |
| ४४—१०।११।१२ | विषयस्तू-समर्थः ··· | अ· २आ· १ सू· ९। १०। १६(ङ) |
| ४४—१३। १४ १५। १६ | तस्या-तृणादिगमने-नेति | अ· ४ आ· १ सू· ७। अ· २ आ· १ सू· १४। १५ |
| ४४—१६।१७।१८ | प्राणो-लभते | |

## सृष्टिसंहारविधिनिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| ४८—८। ९। १० ११। १२। १३ १४। १५ | ब्राह्मेण-विनाशः ··· | अ· २ आ· १ सू· १८। १९(च)। अ· ५ आ· २ सू· १ (छ)। अ· ७ आ· २ सू· १० (ज) |

* अ· २ आ· १ सू· १७। वायुसंज्ञा कथमिति प्रतिपादनाय प्रवृत्तं सूत्रं न व्याख्यातम्।

(क) अत्रत्या कन्दलीपङ्क्तिर्द्रष्टव्या। (ख) वायुसंयोगे प्रमाणमिदं पृथिव्यादिषु संस्कारवत्।

(ग) परमाणुरूपवायुसत्त्वे प्रमाणपराण्येतानि सूत्राणि इत्युपस्कारकृतः।

(घ) स्पर्शवद्द्रव्यपरीक्षाप्रकरणे सामान्यतः अभिधीयमानं तत् पुनः पृथिव्यादिकार्यद्रव्यं त्रिविधमित्यादिसूत्रं कार्यपृथिव्यादीनां त्रिविधतया कार्यवायोश्चतुर्विधतया विशेषतो व्याख्यानं बोध्यमन्यथा सूत्रेण सह विरोधापत्तेः स्पर्शवद्द्रव्यपरीक्षाध्यायार्थ इत्युपस्कारग्रन्थादवगतः।

(ङ) सामान्यतोदृष्टाच्चाविशेष इति सूत्रम् अविशेषे। विशेषरहितः विशेषाविशेषित इति यावत् विशेषश्च द्रव्यत्वव्याप्यजातिविशेषो वायुत्वमित्यादि व्याख्यातं विवृतिकृता वायुत्वप्रकारेण नानुमानमपि तु अष्टद्रव्यातिरिक्तत्वेनेति।

(च) ईश्वरस्य कार्यमात्रकारणत्वं सर्वज्ञत्वं तस्मिन् प्रमाणं च प्रतिपादयतः द्वे सूत्रे सूत्रस्थं कर्मपदं कार्यपरमिति विवृतिकृतः। एवं च परमेश्वरस्य कीदृशं कार्यमात्रं प्रति कारणत्वं सूत्रोक्तं तत्प्रतिपादयति भगवान् भाष्यकारः।

(छ) पृथिवीकर्म कुतो जायत इत्येतत्प्रतिपादनायेदं सूत्रम्। तस्येदं निदर्शनं भाष्यम् सप्तमेऽपि। (ज) विभागस्य कर्मादिजन्यत्वप्रतिपादकं सूत्रम्।

## आकाशनिरूपणे*



(क) तेजोवायुकर्म्मकथनाय प्रवृत्तमिदम् ।

(ख) संयोगस्य कर्म्मादिजन्यत्वप्रतिपादकं सूत्रम् ।

(ग) संयोगस्यासमवायिकारणत्वं प्रतिपादयति सूत्रम् ।

* अ· २ आ· १ सू· ५ इदं रूपादय आकाशे न सन्तीत्येतत्परम् । सू· २० । २२ । २३ एतानि आकाशानुमाने सांख्यमतखण्डनप्रस्तावे सूत्रकृता उक्तानि न भाष्यकृद्भिः व्याख्यातानि ।

(घ) प्रथमानुमानप्रयोगेण व्याख्याते ।

(ङ) द्वितीयतृतीयानुमानप्रकारेण व्याख्यातम् ।

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| ५८—१६ । १७ … | शब्द–विभागाविति … | अ॰ २ आ॰ २ सू॰ ३१[क] |
| ५८—१७ । १८ । १९ | अतो–नित्यम् … | अ॰ २ आ॰ १ सू॰ २८ |
| ५८—१९ । २० … | सर्व–भावेन … … | अ॰ २ आ॰ २ सू॰ २१ |
| ५८—२०<br>५९—१ । २ । ३ | श्रोत्रं–धिर्य्यमिति … | अ॰ २ आ॰ २ सू॰ २१[ख] |

## कालनिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| ६३—१५ । १६ । १७<br>१८ | कालः–स कालः … | अ॰ २ आ॰ २ सू॰ ६ |
| ६३—१८ । १९ । २०<br>२१ | सर्व–व्यवहारहेतुः … | अ॰ २ आ॰ २ सू॰ ९ । [ग] |
| ६३—२१ । २२ । २३<br>२४<br>६४—१ । २ | तस्य–विभाग इति … | अ॰ २ आ॰ २ सू॰ ८ । अ॰ २ आ॰ १ सू॰ ३१[घ] । अ॰ ७ आ॰ १ सू॰ २५ । अ॰ ७ आ॰ २ सू॰ २२[ङ] |
| ६४—२ … … | तस्याकाश–सिद्धे … | अ॰ २ आ॰ २ सू॰ ७ |
| ६४—२ । ३ । ४ । ५ | काललिङ्गा–इति … | अ॰ २ आ॰ २ सू॰ ८ |

## दिङ्निरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| ६६—२० । २१ । २२<br>२३ । २४<br>६७—१ | दिक्–निमित्तासम्भवात् | अ॰ २ आ॰ २ सू॰ १० |
| ६७—१ । २ … | तस्यास्तु–सिद्धाः … | अ॰ २ आ॰ २ सू॰ १२ । अ॰ २ आ॰ १ सू॰ ३१ । अ॰ ७ आ॰ १ सू॰ २४[च] । अ॰ ७ आ॰ २ सू॰ २२ । कारणे दिक् । |

(क) अस्य सङ्गतिः कन्दलीकृता कृता । (ख) सूत्रस्थस्य श्रोत्रशब्दस्य व्याख्येति मन्ये ।
(ग) कारणे सर्वोत्पत्तिमतां कारणे काल इत्याख्या कालाख्येतिसूत्रपदार्थः ।
(घ) नियमेनैकपृथक्त्वमेकत्वमनुविधत्ते इत्युपस्कारकृता व्याख्यातम् । एवं दिङ्निरूपणेऽपि ।
(ङ) कारणपरत्वात् कारणापरत्वाच्च परत्वापरत्वे इति पाठः कन्दलीकारजगदीशयोः सम्मतः । परत्वापरत्वे इति नास्ति उपस्कारग्रन्थे । सङ्गतिश्च तयोः टीकयोः ।
(च) गुणैर्दिग् व्याख्याता इत्येतत्सूत्रमुपस्कारकृता दिशः परममहत्परिमाणे युक्तिपरतया व्याख्यातम् । कन्दलीकृता तु कारणे दिगितिवचनात्परममहत्परिमाणमित्युक्तम् ।

* अ॰ ३ आ॰ १ सू॰ १।६। न व्याख्याते द्वे सूत्रे।

(क) यच्च करणं तत्कर्तृप्रयोज्यमित्यादिना उपस्कारकृता इदं सूत्रं व्याख्यातमिति।

(ख) स देहवृत्तित्वसाधको हेतुः अनपदेश इति तृतीयसूत्रार्थः। कारणेषु देहादिकारणेषु अवयवेषु अज्ञानात् ज्ञानाभावात् इति चतुर्थसूत्रार्थः। यदि परमाणुषु ज्ञानं स्यात् तदा तदारब्धेषु कार्य्येषु ज्ञानात् ज्ञानप्रसङ्गादिति पञ्चमस्यार्थः तथा च सामान्यरूपेण अज्ञत्वादित्यनेन व्याख्यातम्।

(ग) आत्मेन्द्रियार्थसन्निकर्षात् यज्ज्ञानमुत्पद्यते तदनाभासमित्यर्थः ज्ञानमुभयथा आत्मनि लिङ्गम् ज्ञानं क्वचिदाश्रितं कार्य्यत्वाद्रूपवत् इति वा प्रत्यभिज्ञारूपतया वा योऽहमद्राक्षं सोऽहं स्पृशामीति इत्युपस्कारकृतः।

(घ) सामान्यरूपेण पूर्व्वपक्षसिद्धान्तपक्षाणां व्याख्यानमिदं भाष्यम्।

(ङ) कन्दलीपङ्क्तिर्द्रष्टव्या। (च) अत्रत्या कन्दली द्रष्टव्या।

| पृष्ठे—पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| ८९—१६ । १७ ... | मूर्त्तत्वात् परत्वापरत्वे संस्कारश्च | अ॰ ७ आ॰ २ सू॰ २१ [क] |
| ,, १७... ... | अस्पर्श–कत्वम् | |
| ,, १८... ... | क्रियावत्त्वान्मूर्त्तत्वम् | अ॰ २ आ॰ १ सू॰ २१ [ख] |
| ,, १८ । १९ ... | साधारण–दज्ञत्वम् | |
| ,, १९... ... | करणभावात् परार्थम् | |
| ,, १९ । २० ... | गुणवत्त्वाद्द्रव्यम् | अ॰ ३ आ॰ २ सू॰ २ |
| ,, २०... ... | प्रयत्न–चेति | |

**इति द्रव्यनिरूपणं समाप्तम् ।**

---

## गुणनिरूपणे ।*

| पृष्ठे—पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| ९४—६ । ७ ... | रूपादीनां–निष्क्रियत्वम् | अ॰ ८ आ॰ १ सू॰ ८ । अ॰ ५ आ॰ २ सू॰ २२ । अ॰ ७ आ॰ १ सू॰ १४ । १५ [ग] । १६ । अ॰ १ आ॰ १ सू॰ १६ । अ॰ ७ आ॰ २ सू॰ ३ । ४ । ५ [घ] । ११ । १२ । १४ । १५ । १६ [ङ] । २३ । २५ । |
| ९५—३ । ४ ... | रूपरस–मूर्त्तगुणाः | |
| ,, ९ । १० ... | बुद्धि–अमूर्त्तगुणाः | |
| ,, १३... ... | संख्या–उभयगुणाः | |
| ,, १५... ... | संयोग–अनेकाश्रिताः | अ॰ १ आ॰ १ सू॰ २५ [च] |

---

(क) एका दिक् आधारतया ययोस्तौ एकदिक्कौ मूर्त्तौ ताभ्यामित्यर्थः सूत्रस्यैकदिक्कपदस्य। तथा च सूत्राभिप्रेतविषयमिदं मूर्त्तत्वात् परत्वापरत्वे इति भाष्यमिति गम्यते ।

(ख) एकद्रव्यत्वादित्यस्य एकमात्रमूर्त्तसमवायिकारणकत्वादित्यर्थः इति उपस्कारकृता व्याख्यातम् ।

* अ॰ ७ आ॰ १ सू॰ १। इदं सूत्रं न व्याख्यातम् ।

(ग) कर्म्मभिरित्यनन्तरं शून्यानीति गुणैरित्यनन्तरं शून्या इति पूरणीयमिति विवृतिकृतः।

(घ) यद्गुणादावेकत्वज्ञानं तत् भ्रमरूपमेव भवतीति सूत्रार्थः ।

(ङ) शब्दस्य गुणत्वात् अर्थेन घटादिना सह संयोगो नास्तीति चतुर्दशस्य गुणो रूपादिः शब्दैः प्रतिपाद्यते तत्रोभयोर्गुणत्वात् संयोगो न सम्भवतीति पञ्चदशस्य गगनादिशब्दस्य गगनादेश्च निष्क्रियत्वात् संयोगो न सम्भवतीति षोडशस्यार्थः विवृतौ विवृतः । गुणस्य निर्गुणत्वरूपसामान्यकथनेन एतेषां सूत्राणां सामान्यरूपेण व्याख्यानं कृतं भाष्यकृता ।

(च) इदानीं व्यासज्यवृत्तीनां गुणानामनेकद्रव्यारब्धत्वं दर्शयन्नाह इति सूत्रावतरणिका उक्ता उपस्कारकृता ।

(क) रसग्रहणे रसने आपः रूपग्रहणे चक्षुषि तेजः स्पर्शग्रहणे त्वचि वायुः प्रकृतिरिति विवृतिकृतः ।

(ख) चाक्षुषाणीत्यत्रापि पूर्व्वचकारो योजनीयः तेन चाक्षुषाणि स्पार्शनानि चेत्यर्थः विवृतिकृता कृतः ।

(ग) तस्य कारणकलापस्य अभावात् असत्त्वात् अव्यभिचारः उद्भूतरूपादेः कार्य्यकारणभावकल्पनायां गुरुत्वादौ नान्वयव्यभिचारः लौकिकविषयतया प्रत्यक्षं प्रति गुरुत्वादेस्तादात्म्येन प्रतिबन्धकता इत्यर्थमाहुर्विवृतिकृतः ।

(घ) सन्निकर्षः संयुक्तसंयोगाल्पत्वं विप्रकर्षस्तद्भूयस्त्वं तद्द्वाभ्यामित्यर्थ इत्युपस्कारकृतः बुद्धिशब्दसंयोगपरत्वापरत्वानां संयोगजत्वे प्रमाणं सूत्रं प्राप्तम् ।

(ङ) सन्निकृष्टविप्रकृष्टाभ्यामिति विषयेण विषयिणमुपलक्षयति तथा चापेक्षाबुद्धेर्निमित्तकारणत्वमुक्तमित्युपस्कारग्रन्थः ।

(च) रूपरसगन्धस्पर्शाः अवयविषु कारणगुणपूर्वका इति कथनेन समानजातीयकारणजन्यत्वं सूचितम् ।

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| ९९—२२ ... ... | सुख-रम्भकाः | |
| १००—३ । ४ ... | संयोग-रम्भकाः ... | अ० २ आ० २ सू० ३१ । अ० ७ आ० २ सू० ९ । १० । अ० १ आ० १ सू० २७ । २९[क] । |
| ,, ११ । १२ | बुद्धिः-रम्भकाः ... | अ० २ आ० २ सू० ३१ । अ० ९ आ० २ सू० ६ । अ० ६ आ० २ सू० १० । १४ । [ख] |
| ,, १६ ... | रूप-रम्भकाः ... | अ० ७ आ० १ सू० ६[ग] |
| ,, २० । २१ | संयोग-उभयत्रारम्भकाः | |
| १०१—३ । ४ ... | गुरुत्व-हेतवः ... | अ० ५ आ० १ सू० १८ । ७ । १७ । ९ । १०[घ] । १ । २ । ५ । ६ । १४ । १५ । अ० ५ आ० २ सू० १ । २ । ३ । ४ । ५ । ६ । ७ । १३ । १७ । |
| ,, ९ । १० ... | रूप-कारणत्वम् ... | अ० १ आ० १ सू० १९[ङ] । अ० ५ आ० २ सू० २४[च] । अ० १० आ० २ सू० ४[छ] |
| १०२—१ । २ ... | बुद्धि-निमित्तकारणत्वम् | अ० १ आ० १ सू० १९[ज] |
| ,, ४ । ५ ... | संयोग-उभयथा कारणत्वम् | अ० १ आ० १ सू० १९ |
| ,, १२ ... | परत्वा-मकारणत्वम् | अ० १ आ० १ सू० १९ |
| ,, १६ । १७ ... | संयोग-प्रदेशवृत्तित्वम् | |

(क) एतानि सूत्राणि उपलभ्य एतेषां समानासमानजातीयारम्भकत्वमुक्तम् परं तु सर्वेषामेतेषां समानासमानजातीयारम्भकत्वे प्रमाणीभूतं सूत्रं न प्राप्तम् ।

(ख) सूत्राण्येतानि दृष्ट्वा स्वाश्रयसमवेतारम्भका इत्युक्तम् ।

(ग) रूपादीनां कारणगुणपूर्वकत्वकथनेन परत्रारम्भकत्वं प्रकाशितं सूत्रकृता ।

(घ) नवमदशमसूत्राभ्यां नोदनद्वारा प्रयत्नस्य क्रियाहेतुत्वं प्रतीयते ।

(ङ) तथा गुणोऽसमवायिकारणमिति विवृतिकारः । तथा च कस्य कस्य गुणस्यासमवायिकारणत्वमिति प्रतिपादनाय अत्रत्यभाष्यस्यावतारः ।

(च) कारणमिति कारणानीत्यर्थः गुणा असमवायिकारणानीत्यर्थः सूत्रस्य अस्य विशेषतो व्याख्या अत्रत्यं भाष्यम् । (छ) अस्य सूत्रस्य व्याख्या विवृत्यादिग्रन्थे द्रष्टव्या ।

(ज) तथा गुण इतिसूत्रे गुणस्य कारणत्वमुक्तमिति कस्य गुणस्य कीदृशं कारणत्वं कस्य वा न कारणत्वमित्येतत्प्रतिपादनाय अत्रत्यभाष्यपङ्क्तेरवतार इति मन्ये ।

---

(क) रूपग्रहणे चक्षुषि तेजः प्रकृतिरिति विवृतिकृता व्याख्यातम् ।

(ख) रूपोपलब्धिकारणकथनप्रवृत्तसूत्रान्तर्गतोपलब्धिपदं रूपस्य चाक्षुषतया व्याख्यातम् ।

(ग) पार्थिवपरमाणुरूपादीनामग्निसंयोगासमवायिकारणकत्वसाधनार्थं हेतुप्रयोगायोपन्यस्तमेकद्रव्यत्वादितिसूत्रं अग्निसंयोगस्य रूपादिनाशमकृत्वा रूपाद्युत्पादकत्वासम्भवात् अग्निसंयोगनाश्यतया व्याख्यातम् ।

(घ) अत्रापि सूत्रस्थज्ञानपदं रासनादिपरतया व्याख्यातमेवमग्रेऽपि ।

(ङ) रसग्रहणे रसने आपः प्रकृतिरित्युक्तं विवृतिकृता ।

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| १०५—२३ । २४ | घ्राण-रसुरभिश्च | |
| ,, २४ । २५ | अस्यापि-व्याख्याताः | अ॰ ७ आ॰ १ सू॰ २।३।४।५।६।७ |

## स्पर्शनिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| १०६—८ | स्पर्श-ग्राह्यः ... | अ॰ ४ आ॰ १ सू॰ ९। अ॰ ८ आ॰ २ सू॰ ६ |
| ,, ८ । ९ ... | क्षित्यु-वृत्तिः ... | अ॰ २ आ॰ १ सू॰ १ । २ । ३ । ४ |
| ,, ९ | त्वक्सहकारी | |
| ,, ९ ... | रूपानुविधायी ... | अ॰ २ आ॰ १ सू॰ १ । २ । ३ । (क) |
| ,, ९ । १० ... | शीतो-त्रिविधः | |
| ,, १० । ११ ... | अस्यापि-पूर्व्ववत् ... | अ॰ ७ आ॰ १ सू॰ २ । ३ । ४ । ५ । ६ । ७ |

## पृथिवीपरमाणुरूपादीनां पाकजोत्पत्तिविधाने*

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| ,, २० । २१ | घटादेराम-ण्युत्पद्यन्ते | अ॰ ५ आ॰ २ सू॰ १ (ख) |
| ,, २१ । २२ | तेभ्यो विभागाः ... | अ॰ ७ आ॰ २ सू॰ १० (ग) |
| ,, २२ ... | विभागेभ्यः संयोगविनाशाः | अ॰ ९ आ॰ १ सू॰ २ (घ) |
| ,, २२ । २३ | संयोगविनाशे-श्यति | ,, |
| ,, २३ । २४ १०७—१ | तस्मिन्-विनाशः | ,, |
| ,, १ । २ ... | पुन-र्जायन्ते ... | अ॰ ७ आ॰ १ सू॰ ६ |
| ,, २ । ३ । ४ | तदनन्तरं-मुत्पद्यते ... | अ॰ ५ आ॰ २ सू॰ १ अ॰ ७ आ॰ २ सू॰ ९ |
| ,, ५ ... | तत्र-रूपाद्युत्पत्तिः | अ॰ ७ आ॰ १ सू॰ ६।७। अ॰ ४ आ॰ १ सू॰ ३ (ङ) |

(क) सूत्रत्रयदर्शनेन रूपं यत्र वर्त्तते तत्र स्पर्शोऽपि वर्त्तते इति ज्ञायते ऽतः रूपानुविधायीत्युक्तम् ।

* कारणपूर्व्वकाः पृथिव्यां पाकजा इति सप्तमाध्यायसूत्रे यद्रूपादीनां पाकजत्वमुक्तं तस्यैवायं प्रपञ्चः भाष्यग्रन्थेन उक्तः ।

(ख) सूत्रे पृथिवीकर्म्मणि नोदनादीनां कारणत्वमुक्तं तस्यायं दृष्टान्तः भाष्येण प्रकाश्यते एवमग्रेऽपि योजनीयम् ।

(ग) इयमपि भाष्यपङ्क्तिर्दृष्टान्तः ।

(घ) इयमपि दृष्टान्तः ध्वंसस्य ।

(ङ) रूपादीनां कारणे सद्भावात् कार्य्ये सद्भावः कारणगुणपूर्वका हि कार्य्यगुणा भवन्ति इति सूत्रार्थः ।

## संख्यानिरूपणे



---

## परिमाणनिरूपणे



---

(क) इदं तु सूत्रं संख्याया रूपाद्यतिरिक्तत्वप्रतिपादनपरम् प्रकरणभेदेनैव वा कारणभेदकथनेन वा नाशकभेदकथनेन वा व्याख्यातम् । अथवा गुणविभाजकसामान्यसूत्रे संख्यापदसत्त्वात् तां व्याख्यातुकामः भाष्यकारः प्रपञ्चयति एकादीति ।

(ख) यथोक्तं सूत्रद्वयमनुरुध्य परिमाणानां चतुर्विधत्वमुक्तं भाष्यकृता ।

(ग) अणुमहदिति प्रत्ययव्यवहारौ तस्मिन् व्यवह्रियमाणे परिमाणे विशेषस्यापकर्षस्य भावात् सत्त्वात् विशेषस्यापकर्षस्याभावात् भवत इत्यर्थ एकादशस्य एककालत्वादिति विशेषतदभावयोरिति शेषः इति द्वादशस्य दृष्टान्तात् शुक्लतरतमादिरूपात् उत्कर्षापकर्षयोः सम्भवः अत्र किञ्चित् सूत्रं सामान्यतो किञ्चित् विशेषतो व्याख्यातम् ।

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| १३१—४ पङ्क्तिमारभ्य प्रकरणसमाप्तिपर्य्यन्तम् | अनित्यं—विनश्यतीति | अ॰ ७ आ॰ १ सू॰ ९[क]। १०[ख]। १९ |

## पृथक्त्वनिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| १३८—५। ६। ७ ८। ९ | पृथक्त्व—दिति… … | अ॰ ७ आ॰ २ सू॰ २। |

## संयोगनिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| १३९—१३। १४ " १५। १६। १७ | संयोगः—मितिवचनात् | अ॰ १० आ॰ २ सू॰ २[ग]। ५। ६। ७ तथा भवतीति सापेक्षेभ्यो निरपेक्षेभ्यश्च। अ॰ १ आ॰ १ सू॰ २७। २९। अ॰ ५ आ॰ १ सू॰ १ २। ३। ४। ५। ६। १० १४। १७। अ॰ ५ आ॰ २ सू॰ १। ५। ६[घ] ८। १५(ङ) |
| " १७ पङ्क्तिमारभ्य प्रकरणसमाप्तिं यावत् | अथ कथंलक्षण इत्यादि आरभ्य प्रकरणसमाप्तिपर्य्यन्तम् | अ॰ ७ आ॰ २ सू॰ ९ |

## विभागनिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| १५१—४। ५ … | विभागो—हेतुश्च … | अ॰ ७ आ॰ २ सू॰ १०। अ॰ २ आ॰ २ सू॰ ३१ |
| " ५ आ प्रकरणसमाप्तिम्। | प्राप्तिपूर्विका इत्यादि प्रकरणसमाप्तिपर्य्यन्तम्। | अ॰ ७ आ॰ २ सू॰ १०। |

(क) सूत्रे चकारात् प्रचयपरिमाणयोः संग्रहः।

(ख) विवृत्यादिग्रन्थेषु वैधर्म्यं लौकिकप्रत्यक्षाविषयत्वं कारणबहुत्वाद्यजन्यत्वम् अणुत्वादिरूपा जातिश्च उक्ताः। परमाणौ कारणबहुत्वाद्यजन्यत्वं द्व्यणुके लौकिकप्रत्यक्षाविषयत्वं बोध्यम् एवं च अनित्येषु चतुर्षु परिमाणेषु संख्याजन्यत्वं सूत्राभिप्रेतम्।

(ग) विवृतिग्रन्थो द्रष्टव्यः।

(घ) एतानि पञ्चमाध्यायसूत्राणि संयोगस्य कर्मकारणत्वपराणि सामान्यरूपेण भाष्यकृता व्याख्यातानि।

(ङ) अत्र सन्निकर्षपदेन संयोगोऽभिप्रेतः। संयोगस्य गुणहेतुत्वकथनात् सामान्यरूपेण व्याख्यातं भाष्येण।

(क) सूत्रव्याख्या उपस्कारादिग्रन्थेषु द्रष्टव्या विस्तरभयान्नेह तन्यते ।

* अ॰ ८ आ॰ १ सू॰ १ । ३ न व्याख्याते । अत्रैव सू॰ १० । ११ । घटज्ञानपटज्ञानयोः कार्य्यकारणभावखण्डनकथने द्वे सूत्रे न व्याख्याते । अ॰ ८ आ॰ २ सू॰ १ । २ बुद्धिविशेषणकबुद्धिकथने प्रवृत्ते सूत्रे न व्याख्याते । (ख) अविद्यापदं विपर्य्ययपरमित्युपस्कारकृतः ।

(ग) तत्पदमविद्यां परामृशति इत्युपस्कारकृतः ।

(घ) भिन्नप्रकरणे पठितानामपि संशयादीनां विद्यायामविद्यायां वा अन्तर्भाव इत्याशङ्कायां तानविद्यायामन्तर्भावयति भाष्यकारः । विभागबोधकसूत्राभावेऽपि संशयादीनां ज्ञानविशेषाणां पुञ्जीकृत्य विद्याविद्याभेदेन द्विधा विभज्य कथनमेव सूत्राणां व्याख्यानमिति मन्ये ।

(ङ) संशयो द्विविधः वहिर्विषयकोऽन्तर्विषयकश्च आद्यां विधामाह । दृष्टमूर्ध्वत्वं दृष्टवत् दृष्टेन तुल्यं पुरोवर्त्तिनि यद्दृष्टमूर्ध्वत्वं तत्संशयहेतुरित्यर्थः अष्टादशस्य । एकधर्म्मिविषयं दृष्टमुदाहरति । संशयहेतुरिति शेषः अयथादृष्टत्वाद्धेतोर्यथादृष्टमपि संशायकम् । चैत्रो यथादृष्टः केशवान् कालान्तरेऽयथादृष्टः केशविनाकृतो दृष्ट इत्यर्थः क्रमेण तत्रैव वस्त्रावृतमस्तके दृष्टे सति भवति संशयः चैत्रोऽयं सकेशो निष्केशो वेति । इति ऊनविंशस्य । आन्तरसंशयमाह विद्याऽविद्यातश्चेति इति विंशस्यार्थः । (च) सूत्रस्थमविद्यापदं विपर्य्ययपरमिति व्याख्यातमुपस्कारकृता ।

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|

## अनध्यवसायनिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| १८२—१ पङ्क्तिमारभ्य प्रकरणसमाप्तिपर्यन्तम् । | अनध्यवसायोऽपि–भवति[क] | |

## स्वप्ननिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| १८३—१३ पङ्क्तिमारभ्य प्रकरणसमाप्तिपर्यन्तम् । | उपरतेन्द्रियग्रामस्य––ऽविद्येति | अ॰ ९ आ॰ २ सू॰ ७ । ८[ख] । ९ |

## विद्यानिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| १८६—६ । ७ … | विद्यापि–लक्षणा | अ॰ ३ आ॰ १ सू॰ १८ । अ॰ ९ आ॰ २ सू॰ १ । ६ । १३[ग] |

## प्रत्यक्षनिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| १८६—१२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ | तत्रा–गच्छतीति | अ॰ ४ आ॰ १ सू॰ ६[घ] । अ॰ ३ आ॰ १ सू॰ १८[ङ] । अ॰ ८ आ॰ १ सू॰ ६ । ७ |
| ,, —१९।२०।२१ | रूप–मुत्पद्यते … | अ॰ ८ आ॰ १ सू॰ ४[च] । अ॰ ४ आ॰ १ सू॰ ८ । ९ |

---

(क) अनध्यवसायनिरूपणे सूत्रं न प्राप्तम् परं तु संशयसूत्रव्याख्यानावसरे असाधारणधर्म्मदर्शनस्य अनध्यवसायहेतुत्वमुक्तमुपस्कारकृता ।

(ख) यथा आत्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिस्तथा स्वप्नज्ञानमपीत्यर्थः सप्तमस्य । तथेति पूर्व्वसूत्रादनुवर्त्तते यथा आत्ममनःसंयोगात् संस्काराच्च स्वप्नः तथा स्वप्नान्तिकमपीत्यर्थः अष्टमस्य ।

(ग) भिन्नप्रकरणपठितानां प्रत्यक्षलैङ्गिकादीनां पुञ्जीकृत्य विद्यायामन्तर्भावकथनमेव सूत्राणां व्याख्यानं बोध्यम् ।

(घ) सूत्रस्योपलब्धिपदं प्रत्यक्षपरम् ।

(ङ) आत्मेन्द्रियार्थेति सूत्रे आत्मरूपो य इन्द्रियार्थस्तत्र यः सन्निकर्षः अर्थान्मनसः तस्मात् यज्ज्ञानम् तदनाभासमित्यर्थः तज्ज्ञानमहं सुखीत्याद्याकारकम् । आत्ममनःसंयोगजन्यज्ञानस्य प्रत्यक्षत्वज्ञापनाय एवं वक्रोक्तिः । इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षमिति लक्षणात् इति विवृतिकृतः । उपस्कारकृता तु आत्मेन्द्रियार्थसन्निकर्षात् तावत् ज्ञानमुत्पद्यते तदन्यदनाभासमित्यर्थः कृतः आत्मा इन्द्रियेण इन्द्रियमर्थेन सम्बध्यते ततः यज्ज्ञानमुत्पद्यते तत्प्रत्यक्षात्मकमेव भवति इति गम्यते तदनेन भाष्येण व्याख्यातम् ।

(च) अस्य विशेषतो व्याख्या अत्रत्यं भाष्यम् ।

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| १९६—२१ । १९७—१ | शब्दस्य—तेनैवोपलब्धिः | अ॰२ आ॰२ सू॰२१। अ॰८ आ॰१ सू॰४ |
| १९७—१ । २ । ३ | संख्या—ग्रहणम् … | अ॰ ४ आ॰ १ सू॰ ११ । अ॰ ८ आ॰ १ सू॰ ४(क) |
| १९७—३ । ४ … | बुद्धि—दुपलब्धिः … | अ॰३ आ॰१ सू॰१८(ख)। अ॰८ आ॰१ सू॰४ |
| १९७—५ । ६ । ७ | भाव—प्रत्यक्षम् … | अ॰ ८ आ॰ १ सू॰ ५ । अ॰ ४ आ॰ १ सू॰ १३ |
| १९७ — ७ । ८ । ९ । १० । ११ | अस्मद्विशिष्टानां— —मुत्पद्यते | अ॰ ९ आ॰ १ सू॰ ११ । १२ |
| १९७—११ । १२ । १३ | वियुक्तानां—मुत्पद्यते | अ॰९ आ॰ १ सू॰ १३ । १४ । १५(ग) |
| १९७—१३पङ्क्तिमारभ्य प्रकरणसमाप्तिपर्यन्तम् । | तत्र—दर्शनमिति | |

## अनुमाननिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| २००—४ । २००—१८ । १९ । २० | लिङ्ग—लैङ्गिकम् । लिङ्गं पुनः—मनुमापकम् | अ॰ ९ आ॰ २ सू॰ १ |
| २००—२१ । २२ | विपरीत—ऽब्रवीत् | अ॰ ३ आ॰ १ सू॰ १५ |
| २०१—१८ । १९ । २० । २१ | यदनु—भवतीति … | अ॰ ९ आ॰ २ सू॰ १ |
| २०४—२४ । २५ । २६ | यत्तु—सन्दिग्धश्चेति | अ॰ ३ आ॰ १ सू॰ १५ |
| २०५—१० । ११ । १२ । १३ | विधिस्तु—भवतीति … | अ॰ ९ आ॰ २ सू॰ १(घ) |

(क) गुणेषु रूपादिषु कर्म्मसु चोत्क्षेपणादिषु यज्ज्ञानं निष्पद्यते तत्र द्रव्यं कारणं योग्यद्रव्यनिष्ठमेव तदुभयं गृह्यते इति सूत्रार्थः । तत्र कस्मिन् कस्मिन् गुणप्रत्यक्षे किं किं कारणमिति प्रतिपादनाय प्रवृत्तं भाष्यम् ।

(ख) यथोक्तविवृतिव्याख्या द्रष्टव्या । तथाहि आत्मरूपे इन्द्रियार्थे यः सन्निकर्षः तस्मात् सुखादिप्रत्यक्षं जायते इति फलितोऽर्थः । (ग) सामान्यरूपेण व्याख्यानमिदम् ।

(घ) अस्य सूत्रस्यायं प्रपञ्चो भाष्यग्रन्थेन विवृतः ।

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
| --- | --- | --- |
| २०५—१३ । १४ १५ । १६ १७ । १८ १९ | एवं-सिद्धम् ··· ··· | अ॰ ९ आ॰ २ सू॰ २(क) । अ॰ ३ आ॰ १ सू॰ ९ । १० । ११ । १२ । १३ १४ । ७ । ८(ख) |
| २०५—१९ । २० २१ । २२ २०६—१ । २ । ३ ४ । ५ । ६ ७ । ८ । | तत्तु-स्वनिश्चितार्थ-मनुमानम् | अ॰ ९ आ॰ २ सू॰ १ । (ग) अ॰ २ आ॰ १ सू॰ ८ |
| २१३—१२ । १३ १४ । १५ १६ । १७।१८ | शब्दादीना—*ददा-तिरित्युक्तत्वात् | अ॰ २ आ॰ २ सू॰ ३२ । अ॰ १० आ॰ २ सू॰ ९ । अ॰ ९ आ॰ २ सू॰ ३ ४(घ) । अ॰ ६ आ॰ १ सू॰ १ । २ (ङ) । ३ । अ॰ १ आ॰ १ सू॰ ३ |
| २२०—९ । १० ··· | प्रसिद्धा—प्यनुमानमेव | |
| २२०—१६ । १७ ··· | आप्तेना-वचनमेव | |
| २२३—१ । २ ··· | दर्शनार्था—नुमानम् | |
| २२५—१० ··· | सम्भवो—नुमानमेव | अ॰ ९ आ॰ २ सू॰ ५(च) |
| २२५—१४ । १५ ··· | अभावो—कारणासद्भा-वे लिङ्गम् | |
| २३०—२४··· ··· | तथैवै-एवेति | |

(क) विवृत्यादिग्रन्था द्रष्टव्याः ।

(ख) इतरस्येतिपदेन व्याख्याते ७ । ८ संख्यके द्वे सूत्रे । के हेतव इति प्रतिपादनाय प्रवृत्तानि सूत्राणि सामान्यरूपेण व्याख्यातानि ।

(ग) एतस्य सूत्रस्य विभागपूर्व्वकं विशेषतो व्याख्यानं भाष्येणोपदर्शितम् ।

* अ॰ ७ आ॰ २ सू॰ १७ । १८ । १९ । २० । शब्दार्थयोः सम्बन्धाभावप्रस्तावे प्रवृत्तानि एतानि सूत्राणि न भाष्यकृता व्याख्यातानि ।

(घ) ननु शब्दः कथं लिङ्गं शब्दस्यापदेशस्वभावत्वेन लिङ्गभिन्नत्वादत आह हेत्वित्यादि । अपदिश्यतेऽनेनेत्यपदेशः शब्दः स च हेतुलिङ्गपर्याय एव प्रमाणमिति लिङ्गविधया प्रमाकरणमित्यर्थः करणशब्दोऽपि लैङ्गिकज्ञानकरणे लिङ्गएव वर्त्तते इत्यादि व्याख्यातमुपस्कारकृता तथा चास्य सूत्रस्य सामान्यरूपेण व्याख्यानमिदं भाष्यं बोध्यम् ।

(ङ) ब्राह्मणे वेदभागविशेषे यत् संज्ञारूपं कार्य्यं तत् संज्ञाकर्त्तुर्वाक्यार्थधियो लिङ्गमित्यर्थ इति विवृतौ ।

(च) उपमानादीनामपि पराभिमतानामविनाभावबलप्रवृत्तिकानां लैङ्गिक एवान्तर्भाव इति प्रतिपादयितुमाह इत्यवतारणिका उपस्कारकृताम् ।

(क) लैङ्गिकं द्विविधम् स्वार्थं परार्थं च इति कृत्वा सूत्रद्वयं व्याख्यातं भाष्यकृता ।

(ख) बाधसत्प्रतिपक्षौ काश्यपमते न स्वतन्त्रौ बाधस्याश्रयासिद्ध्यनैकान्तिकान्यतरत्रान्तर्भावात् प्रकरणसमस्य च अनैकान्तिकाद्यन्यतरत्रान्तर्भावात् । वृत्तिकारमते तु सूत्रस्थचकारात् तौ सूचितौ ।

(ग) अ॰ ६ आ॰ २ सू॰ ४ अत्र सूत्रे यल्लिङ्गस्यापदेशत्वकथनं तत् शब्दस्य प्रमाणान्तरत्वखण्डनायोपन्यस्तं न तु अवयवघटकापदेशकथनाय प्रवृत्तम् ।

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|

## अनुसन्धाननिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| २४९—७ । ८ । ९<br>१० । ११<br>१२ । १३ | निदर्शने–निष्क्रिय इति | अ॰ ९ आ॰ २ सू॰ १ । २ |

## प्रत्याम्नायनिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| २५०—२५ पङ्क्तिमारभ्य प्रकरणसमाप्तिपर्यन्तम् । | अनुमेयत्वेनोद्दिष्टे– –सिद्धमिति | अ॰ ९ आ॰ २ सू॰ १ । २ |

## निर्णयस्य मानान्तरत्वखण्डने

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| २५५—२३ । २४<br>२५ । २६<br>२५६—१ । २ । ३<br>४ । ५ । ६ | विशेष–निर्णय इति ··· | अ॰ ९ आ॰ २ सू॰ १२(क) । अ॰ १० आ॰ १ सू॰ ३(ख) |

## स्मृतिनिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| २५६—१७ । १८<br>१९ । २० | लिङ्ग–स्मृतिरिति ··· | अ॰ ९ आ॰ २ सू॰ ६ |

## आर्षज्ञाननिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| २५८—१ । २ । ३ । ४<br>५ । ६ । ७ | आम्नाय–कथयतीति | अ॰ ९ आ॰ २ सू॰ १३ |

## सिद्धदर्शनान्तर्भावनिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| २५८—२० । २१ । २२<br>२३ । २४<br>२५९—१ । २ । ३ | सिद्धदर्शनं–बुद्धिरिति | अ॰ ९ आ॰ २ सू॰ १३ |

(क) संशयस्य अविद्यान्तर्गतत्वेन निश्चयस्य विद्यान्तर्गततया विद्यान्तर्भावकथनमेव विद्याव्याख्यायां प्रविष्टम् ।

(ख) तयोः संशयनिर्णययोः निष्पत्तिरुत्पत्तिः प्रत्यक्षात् लिङ्गाच्च सुखं वा दुःखं वा न प्रत्यक्षसामग्रीजन्यं न वा लिङ्गजन्यमित्यर्थः सूत्रस्योपस्कारकृता दर्शितः ।

(क) लक्षणभेदकथनेनैव कार्यभेदकथनेनैव वा सुखदुःखयोः परस्परतः ज्ञानाच्च भेदः प्रतिपादितः ।

(ख) सुखादीत्यादिपदेन ११।१२।१३ सूत्राणि व्याख्यातानि। इच्छासामान्यसूत्रं न प्राप्तम्।

(ग) एतत्सूत्रस्थमिच्छाद्वेषपदे वा व्याख्याते । एवमग्रे ।

(घ) सुखाद्राग इत्युपलक्षणम् अहिकण्टकादिजन्यदुःखात् तत्साधने द्वेषोऽपि बोध्यः ।

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| २६४—२३ ... | त्रिद्रव्यवृत्ति ... ... | अ॰ २ आ॰ १ सू॰ २। ६। ७। |
| २६४—२३। २४ २५। २६ | तन्तु-निष्पत्तयः ... | अ॰ २ आ॰ १ सू॰ २। ६। ७(क) |
| २६४—२६। २७ २६५—१। २। ३ | सङ्घातदर्शनात्-द्रव-त्वानुत्पत्तिः | अ॰ ५ आ॰ २ सू॰ ८ |
| २६५—३। ४। ५ ६। ७। ८ ९।१०।११ | नैमित्तिकं-कारण-गुणप्रक्रमेण द्रव-त्वमुत्पद्यतइति | अ॰ २ आ॰ १ सू॰ ६। ७। (ख) |

## स्नेहनिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| २६६—१६। १७ | स्नेहो-निष्पत्तयः ... | अ॰ २ आ॰ १ सू॰ २(ग) |

## संस्कारनिरूपणे

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| २६६—२३।२४।२५ २६७—१।२।३।४।५।६ ७।८।९।१० ११।१२।१३ | संस्कार-पद्मदर्शना-दिति | अ॰ ५ आ॰ १ सू॰ १७। अ॰ ९ आ॰ २ सू॰ ६ |
| २६७—१३ ... | स्थितिस्थापकस्तु(घ) | |

## धर्म्मनिरूपणे*

| पृष्ठे पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|
| २७१—८। ९। १० ११ | धर्म्मः-निमित्तः ... | अ॰ १ आ॰ १ सू॰ २। अ॰ ६ आ॰ २ सू॰ १। अ॰ ६ आ॰ १ सू॰ ५(ङ) अ॰ १० आ॰ २ सू॰ ८ |
| २७२—११।१२।१३ १४।१५।१६ | तस्य तु-ऽप्रमादश्च ... | अ॰६आ॰२सू॰२।५।८। ९।३।४(च) |

(क) नन्वपां लक्षणं द्रवत्वमुक्तं तच्च युक्तं पृथिव्यामपि तदुपलम्भात् अत आह सर्पिरित्यादि। सर्पिरादीनां यद्द्रवत्वं तन्नैमित्तिकमपां तु सांसिद्धिकम्। ननु तथापि त्रपुसीसादावतिव्याप्तिरत आह। त्रप्वित्यादि। तत्रापि नैमित्तिकमेवेति भाव इत्युपस्कारकृतः।

(ख) एतयोः सूत्रयोरयं प्रपञ्चः।

(ग) स्नेहोऽप्सु वर्त्तते इति सूत्रकृता उक्तम्। तत्र स्नेहस्य प्रपञ्चोऽयं भाष्यग्रन्थः।

(घ) स्थितिस्थापकार्थबोधकं सूत्रं मृग्यम्।

* अ॰ ६ आ॰ १ सू॰ ४। ६। १०। ११। १२। १३। १४। १५। १६। एतानि सूत्राणि धर्म्मप्रस्तावे कथितान्यपि न भाष्यकृता व्याख्यातानि।

(ङ) भाष्यस्थेन कर्तुरितिपदेनेदं सूत्रं व्याख्यातम्। एवमधर्म्मनिरूपणेऽपि।

(च) किञ्चित्सूत्रं विशेषतः किञ्चित् सामान्यतः व्याख्यातम्।

(क) धर्म्मनिरूपणप्रस्तावे षष्ठाध्यायप्रथमाह्निकस्थानां बहूनां सूत्राणां व्याख्या भाष्यकृता न कृतेति मन्ये।

(ख) धर्मसाधनविपरीतानीत्येतेनैव व्याख्यातानि।

(ग) कर्त्तुरितिपदेन व्याख्यातम्।

(घ) विहिताकरणमित्यनेन हिंसापदेन च व्याख्यातानि।

(ङ) तत्संयोगः ताभ्यां धर्म्माधर्म्माभ्यां जनितः संयोगः जन्म विभागः मरणं जन्ममरणप्रवाह इति यावत्। इति सूत्रार्थः।

(च) आत्मकर्म्मसु श्रवणादिषु सत्सु मोक्षो व्याख्यात आगमेऽभिहितः। इति सूत्राक्षरार्थः।

(छ) गुणप्रकरणेनैव अ· २ आ· २ सू· २३।२४।२५ संख्यकसूत्राणां व्याख्या कृता।

| पृष्ठे पङ्क्तौ | | भाष्यम् | | सूत्रसंख्या |
|---|---|---|---|---|
| २८७—१७ | ... | श्रोत्रग्राह्यः | ... ... | अ॰ २ आ॰ २ सू॰ २१ |
| ,, —१७। १८। १९ | | क्षणिकः—कारणः | ... | अ॰ २ आ॰ २ सू॰ २५ । २६ । २७ २८ । २९ । ३० । ३१ । ३२ (क) |
| ,, —१९ पङ्क्तिमारभ्य प्रकरणसमाप्तिपर्यन्तम् । | | स द्विविधो—सिद्धिरिति | | अ॰ २ आ॰ २ सू॰ ३२(ख) |

## समाप्तं गुणनिरूपणम् ।

---

## कर्म्मनिरूपणे*

| पृष्ठे पङ्क्तौ | | भाष्यम् | | सूत्रसंख्या |
|---|---|---|---|---|
| २९०—२ | ... | उत्क्षेप—सम्बन्धः | ... | अ॰ १ आ॰ १ सू॰ ७ |
| २९०—३ | ... | एकद्रव्यवत्त्वं | ... | अ॰ १ आ॰ १ सू॰ १७ । २६(ग) |
| २९०—३ | ... | क्षणिकत्वं | ... ... | अ॰ २ आ॰ २ सू॰ २५ |
| २९०—३ | ... | मूर्त्तद्रव्यवृत्तित्वं | ... | अ॰ २ आ॰ १ सू॰ २१(घ) |
| २९०—३ । ४ | ... | अगुणवत्त्वं | ... | अ॰ १ आ॰ १ सू॰ १७ |
| २९०—४ | ... | गुरुत्वद्रवत्वप्रयत्नसंयोगजत्वं | | अ॰ १ आ॰ १ सू॰ २९(ङ) |
| २९०—४ । ५ | ... | स्वकार्य्यसंयोगविरोधित्वं | | अ॰ १ आ॰ १ । सू॰ १४ |
| २९०—५ | ... | संयोगविभागनिरपेक्षकारणत्वम् | | अ॰ १ आ॰ १ सू॰ १७ । २० । ३० |
| २९०—५ । ६ | ... | असमवायिकारणत्वं | | अ॰ १० आ॰ २ सू॰ ३ |

---

(क) किञ्चित्सामान्यतः किञ्चिद्विशेषतः व्याख्यातं सूत्रम् । यद्यपि शब्दस्य नित्यत्वानित्यत्ववादिनां अ॰ २ आ॰ २ सू॰ ३३ । ३४ । ३५ । ३६ ३७ । एतत्संख्यकानि सूत्राणि जन्यत्वनाशत्वज्ञापनेन सामान्यतो व्याख्यातानि तथापि पूर्व्वपक्षाव्याख्यानात् नात्र निवेशितानि ।

(ख) लिङ्गाच्चानित्यः शब्द इतिसूत्रे वर्णात्मकः शब्दोऽनित्यः जातिमत्त्वे सति श्रोत्रग्राह्यत्वात् वीणादिध्वनिवदिति उपस्कारकृता व्याख्यातमिति द्वैविध्यं शब्दस्य सूत्राभिप्रेतमिति गम्यते ।

* अ॰ ५ आ॰ १ सू॰ ८ । १४ एतत्संख्यके द्वे सूत्रे । अ॰ ५ आ॰ २ सू॰ ९ । १० जले दिव्यतेजःसंयोगे मानकथनपरे द्वे सूत्रे । एतानि भाष्यकृता न व्याख्यातानि ।

(ग) उपस्कारव्याख्या अनुसरणीया ।

(घ) सूत्रस्थमेकद्रव्यत्वादितिपदं एकमात्रमूर्त्तसमवायिकारणकत्वादित्यर्थकम् ।

(ङ) सूत्रस्थमुत्क्षेपणपदमवक्षेपणादेरुपलक्षकम् ।

---

## उत्क्षेपणादिकर्म्मनिरूपणे



---

## गमननिरूपणे

२९२ पृष्ठीयां ८ पङ्क्तिमारभ्य २९४ पृष्ठीयनवमपङ्क्तिपर्य्यन्तम् २९६ पृष्ठीयां प्रथमपङ्क्तिमारभ्य १६ पङ्क्तिपर्यन्तं च यावद्भाष्यग्रन्थस्य मूलं सूत्रं न प्राप्तमतिरिक्तमिति कर्म्मविभाजकसूत्रस्यैव व्याख्येति मन्ये ।

---

## सत्प्रत्ययकर्म्मनिरूपणे



(क) कर्म्मविभाजकसामान्यसूत्रस्यायं प्रपञ्च इति मन्ये ।

| पृष्ठे | पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|---|
| २९८ | १०।११।१२ १३ । १४ | तत्कर्म्मा-समर्थो भवति | अ॰ ५ आ॰ १ सू॰ ४ । ५(क) |
| २९८ | १४।१५।१६ १७ । १८ १९ । २० | अथवा-कर्म्मेति | अ॰ ५ आ॰ १ सू॰ ३ । ४ । ५ । |

## पाणिमुक्तेषुगमननिरूपणे

| पृष्ठे | पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|---|
| ३०० | १२ । १३ १४ । १५ | कथम्-भवतः··· ··· | अ॰ ५ आ॰ १ सू॰ १ । २ |
| ३०० | १५।१६।१७ १८ । १९ | प्रसारिते-नोदनापेक्षं | अ॰ ५ आ॰ १ सू॰ ९ । १० |
| ३०० | २० । २१ २२ । २३ | तस्मिन्-न्त्यापतना-दिति | अ॰ ५ आ॰ १ सू॰ १७ । १८ |

## यन्त्रमुक्तेषुगमननिरूपणे

| पृष्ठे | पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|---|
| ३०१ | १३पङ्क्तिमारभ्य प्रकरणसमाप्तिपर्य्यन्तम् । | कथम्-कारणाभावा-दिति | अ॰ ५ आ॰ १ । सू॰ १।२।१७।१८।१९ |

## अप्रत्ययकर्म्मनिरूपणे

| पृष्ठे | पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|---|
| ३०३ — ३०४ | २०।२१।२२ २३।२४।२५ — ७ | एवमात्मा-पृथिव्याम् । | अ॰ ५ आ॰ २ सू॰ १ । १२ । |
| ३०४ | ७।८।९।१० ११।१२।१३।१४ | वेगा-पृथिव्यादिषु कर्म्म भवति | अ॰ ५ आ॰ २ सू॰ १ । १२ |
| ३०४ | १४।१५।१६ १७ । १८ | ये च-संस्काराभ्याम्··· | अ॰ ५ आ॰ १ सू॰ ७ । १८ अ॰ ५ आ॰ २ सू॰ ३ |

(क) उलूखलाभिहतमुसलेन सह हस्तस्य यदाकस्मिकमुत्पतनं तत्र प्रयत्नवदात्मसंयेगो न कारणमित्याह तथेत्यादि तथाविधे हस्तकर्म्मणि आत्मसंयोगः प्रयत्नवदात्मसंयोगः तथा नासमवायिकारणमित्यर्थः चतुर्थस्यार्थः । किं तर्हि तादृशकर्म्मकारणमत आह अभिघातादित्यादि इति पञ्चमस्यावतरणिका विवृतिकृताम् ।

## सामान्यनिरूपणे

| पृष्ठे | पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|---|

## विशेषनिरूपणे

| पृष्ठे | पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|---|
| ३२१ | १२ पङ्क्तिमारभ्य प्रकरणसमाप्तिपर्यन्तम्। | अन्तेषु भवा—दित्विति | अ॰ १ आ॰ २ सू॰ ६ |

## समवायनिरूपणे

| पृष्ठे | पङ्क्तौ | भाष्यम् | सूत्रसंख्या |
|---|---|---|---|
| ३२४ | १९ पङ्क्तिमारभ्य समवायनिरूपकप्रकरणसमाप्तिपर्यन्तम्। | अयुतसिद्धा—तस्मादिहबुद्ध्यनुमेयः समवाय इति। | अ॰ ७ आ॰ २ सू॰ २६। २७। २८<br>अ॰ ५ आ॰ २ सू॰ २३ |

# भाष्यकृदव्याख्यातानां सूत्राणां सूचीपत्त्रम्

अ॰ १ आ॰ २ सू॰ १। २(क)

अ॰ २ आ॰ १ सू॰ ५। २०। २२। २३। १७

अ॰ ३ आ॰ १ सू॰ १।

अ॰ ४ आ॰ २ सू॰ २। ३(ख)। ४

अ॰ ५ आ॰ १ सू॰ ८। १४

अ॰ ५ आ॰ २ सू॰ ९। १०। १९। २०(ग)

अ॰ ६ आ॰ १ सू॰ ४। ९। १०। ११। १२। १३। १४। १५। १६(घ)

अ॰ ७ आ॰ १ सू॰ १

अ॰ ७ आ॰ २ सू॰ ६। ७। ८। १७। १८। १९। २०।

अ॰ ८ आ॰ १ सू॰ १। ३। १०। ११

अ॰ ८ आ॰ २ सू॰ १। २। ४

अ॰ ९ आ॰ १ सू॰ १। २। ३। ४। ५। ६। ७। ८। ९। १०(ङ)

अ॰ १० आ॰ १ सू॰ ७

---

(क) कार्य्यकारणभावविचारप्रस्तावे।

(ख) शरीराणां पञ्चात्मकत्वत्र्यात्मकत्वप्रतिषेधपरे सूत्रे परं तु भाष्यकृता कण्ठरवेण तत्र प्रतिषिद्धमिति।

(ग) तमसोऽभावरूपत्वबोधके द्वे सूत्रे।

(घ) एतानि सूत्राणि धर्म्मनिरूपणप्रस्तावे उक्तानि न भाष्यकृद्भिः व्याख्यातानि।

(ङ) अभावनिरूपणे एतानि सूत्राणि।

॥ श्रीः ॥

# न्यायकन्दलीटीकासहितस्य प्रशस्तपादभाष्यस्य

## सूचीपत्त्रम् ।

॥ श्रीः ॥

# सटीकप्रशस्तपादभाष्यस्य

## शुद्धिपत्त्रम्* ।

| पृष्ठे पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|
| २।२५ | किमय | किमर्थं |
| ३।२१ | सवासनासमुच्छेदो | सवासनसमुच्छेदो |
| ६। ८ | श्रुतप्रयुज्य | अश्रुतप्रयुज्य |
| ७। २ | प्रार्थना शत | प्रार्थनाशत |
| ७।२३ | दर्शनापूर्वका | दर्शनपूर्वका |
| ८। ४ | हेतुकत्वं | हेतुत्वं |
| ८।१६ | तेजस्त्वादि | तेज आदि |
| ६। ३ | तमोद्रव्यं | तमो द्रव्यं |
| ११। ४ | स्पन्दना | स्पन्दनो |
| ११। ५ | नमन्नोन्नमना | नमनोन्नमना |
| १२। ४ | तत्रास्ति व्यव | तत्रास्तिव्यव |
| १६।२५ | भावो भावस्य | भावो भवस्य |
| १७।१३ | सत्ताकारण | सत्ता कारण |
| १७।२४ | मा ेण | मात्रेण |
| २३।१२ | आवरण भावो | आवरणाभावो |
| २३।१८ | महदणु | महदनु |
| २३।२० | सम्बध्यन्ते । | सम्बध्यन्ते |
| २६।१७ | नियमः | न नियमः |
| २९। २ | विद्वांशः | विद्वांसः |
| २९। ३ | समीक्ष्यन्ते | समीचन्ते |
| २९।१६ | स्याकरणत्वात् | स्याकारणत्वात् |
| ३०।१७ | इत्ति कल्पना | इतिकल्पना |
| ३०।२७ | सम्बन्धिद्रव्य | सम्बन्धि द्रव्य |
| ३१।१८ | परमाणुर्नास्ति | परमणुर्नास्ति |
| ३३।१७ | नियमस्यादृष्ट एव | नियमस्यादृष्टमेव |
| ३४। ९ | प्रणष्ट | प्रनष्ट |
| ३९।१९ | प्रदाप | प्रदीप |
| ४०।१९ | विलक्षणं गुणा | विलक्षणगुणा |
| ४०।२७ | तर्चेति | तत्रेति |
| ४१।२३ | सर्वदाभिक्षा | सर्वदा भिक्षा |
| ४६।१३ | रूप वप्रयोगात् | रूपविप्रयोगात् |
| ४६।२५, ४६।२६ | वृत्ति | धृति |
| ४७।१७ | मत्स्वेद | मत्वेद |
| ५६।२६ | बुद्ध्यादाना | बुद्ध्यादीना |
| ६१।१४ | प्रमाणविषय | प्रमाणं विषय |
| ६५। ९ | गितः | गतिः |
| ७१। ८ | वर्धकिणा | वर्धकिना |
| ७१।२८ | अतिरूपि | मतिरूपि |
| ७३।२० | क्रमाक्रमात्मकस्य | क्रमाक्रमानात्मकस्य |
| ७४।१२ | काय | कार्यं |
| ७४।२२ | निर्वृत्तेः | निवृत्तेः |
| ७६।१५ | तादात्म्यभावात् | तादात्म्याभावात् |
| ७८। ७ | ऽस्मभ्यं भ्राम्यति भवान् | |
| ७९।१७ | विनिष्ट | विनष्ट |
| ७९।२४ | नास्ति बुद्धि | नास्तिबुद्धि |
| ८०।१४ | नैके | नैकत्र |
| ८१।२५ | कालताग्रहणात् | कालत्वाग्रहणात् |
| ८४। ६ | रूपरसयोर्दर्शा | रूपरसयोर्दर्शी |
| ८४। ९ | सादन्तो | सा दन्तो |
| ८४।१० | साहचर्यप्रतीतौ | साहचर्याप्रतीतौ |
| ८५।२० | भोक्तृत्वात् | भोक्तृत्वम् |
| ८७। ३ | कत्वेपि । | कत्वेपि |
| ८७।११ | एकत्वपि | एकत्वेपि |
| ८८। ९ | पृथक्त्वस्य | पृथक्त्वस्ये |
| ९०। ९, ९०।११, ९०।१९ | करणान्तर | कारणान्तर |
| ९४। ९ | निःष्यन्दाय | निःस्पन्दाय |
| ९७। ३ | धर्मान्तरधर्मान्तरं | धर्मान्तरं |
| ९७।१५ | विषयेन्द्रियासन्नि | विषयेन्द्रियसन्नि |
| ९८।२६ | त्वापाकजाः | त्वपाकजाः |
| ९९। ३ | जंयोगजम् | संयोगजम् |

* अस्मिन् शुद्धिपत्त्रे तासामशुद्धीनां नोल्लेखो यासां दर्शनमात्रादेव बोधः यासु चादर्शपुस्तकानां साम्यम् ।

| पृष्ठे पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|
| १०१।२३ | काय सजाती | कार्यसजाती |
| १०२।११ | नोदनाभिघातः | नोदनाभिघातौ |
| १०२।२६ | यथा | तथा |
| १०३। १ | लभते | लभ्यते |
| ११५। ३ | रूपरसस्पशा | रूपरसस्पर्शा |
| ११५।११ | समाश्रयणम् | समासाश्रयणम् |
| ११६। ८ | निर्देशः। चण | निर्देशः चण |
| ११६।१२ | तदा नानन्तर्य | तदानन्तर्य |
| ११६।२० | द्वित्वसामान्यं | द्वित्वत्वसामान्यं |
| ११६।२२ | द्वित्वसामान्य | द्वित्वत्वसामान्य |
| ११८। ८ | निमित्तकारणा-दपि | निमित्तकारणवि-नाशादपि |
| ११८।११ | द्वित्वगुणज्ञान | द्वित्वगुणतज्ज्ञान |
| ११८।१३ | गुणबुद्धविनश्य | गुणबुद्धेर्विनश्य |
| ११८।१७ | कार्ोत्पत्ति | कार्योत्पत्ति |
| ११९। २ | संवर्तका | संप्रवर्तका |
| ११९। ४ | सचिवा श्रन्त्य | सचिवान्त्य |
| १२०। २ | न्यबुद्ध | न्यबुद्धे |
| १२०। ४ | मकत्यैव प्रणष्ट | मकत्वैव प्रनष्ट |
| १२०। ५ | स्योत्पत्या | स्योत्पत्त्या |
| १२०।१४ | द्वित्वकाले | द्वित्वसामान्यबु-द्धिकाले |
| १२१। ४ | विशेषणानुक्त-त्वाद् | विशेषणानुरक्त-त्वाद् |
| १२६। २ | णत्वे नो | णत्वेनो |
| १२८। ८ | नियमे न | नियमेन |
| १३१।१० | प्रचय | प्रचयः |
| १३१। ७ | णुत्वमारभते। यस्तु | णुत्वमारभते द्वाभ्यां यद् द्व्यणुकमारब्ध तत्रैव स्वबुद्ध्यपेक्षोत्पन्ना परमाणौ वर्तमाना द्वित्वसंख्या णुत्वमारभते । यस्तु |
| १३७।१७ | दीघपु | दीर्घपु |
| १४४।१८ | से नात्रापिभ | स नोत्रापि भः |
| १४६। ३ | प्रचेति र्क | प्रचेति तर्क |
| १४६।२३ | क्रियावत् | क्रियावता |
| १४८।१४ | कारणत्वभाव | कारणत्वाभावः |
| १५३।२६ | व्यणु | द्व्यणु |
| १५७।११ | द्वितोयभागे | द्वितीयविभागे |
| १६१।१६ | संयोगमात्रण | संयोगमात्रेण |
| १६१।२२ | च्वांशोय | च्वांशोर्य |
| १६२। १ | तदाऽश्रय | तदाऽऽश्रय |
| १६२। ४ | विभागेनो | विभागो नो |
| १६८।१५ | परत्वस्य | ऽपरत्वस्य |
| १७३।२६ | दन्त 'विष्यति | दन्तर्भविष्यति |
| १८२।२१ | रूपत्त्वा | रूपवत्त्वा |
| १८८।२० | तद्धाति | तद्धीति |
| २००।१२ | श्रन तु | श्रन्य तु |
| २०१।२२ | वृत्ताता | वृत्तता |
| २१२। ८ | सम्प्रत्यि | सम्प्रत्यपि |
| २१६। ३ | श्रन्यसे | मन्यसे |
| २२३।२२ | तद्ध्यर्था | तर्द्ध्यर्था |
| २२४।१७ | द्वितायो | द्वितीयो |
| २३३।२७ | श्रनुमानेताप | श्रनुमानतोपः |
| २४२। १ | व्यातरेके | व्यतिरेके |
| २४८।२६ | प्रतीयेते त एव | प्रतीयेते ते एव |
| २५०।११ | पक्षधर्मतामिद्धि | पक्षधर्मतासिद्धिः |
| २५३।११ | प्रतिपत्तृ | प्रतिपत्तृ |
| २५५।१० | विकल्प- | विकल्प्य |
| २५५।१५ | श्रनुमानं प्रमाण | श्रनुमानं न प्रमाणं |
| २५६। ७ | दृश्यद्रष्टृणा | दृश्यद्रष्टृणा |
| २८७। ८ | चिलया | त्रिलया |
| ३०६।११ | समान्तादि | समन्तादि |
| ३११।२० | सत्तासान्यं | सत्तासामान्यं |
| ३११।२२ | प्वेकस्मा | प्वेकस्मात् |
| ३३०।१६ | द्वभूब | द्वभूव |

## सम्बन्धसूचीपत्रस्य शुद्धिपत्रम् ।

| पृष्ठे पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|
| ५।२२ | उर्द्ध | ऊर्ध्वं |
| ६।२४ | कारेण नानुमान-मपि | कारेण साध्यं नानुमाने प्रविष्टमपि |
| २३।२५ | सूत्रस्यमिच्छा | सूत्रस्ये इच्छा |
| २४।३० | धर्मप्रस्तावे | धर्मनिरूपणप्रस्तावे |
| २५।२६ | व्याख्यातानि | व्याख्याते |
| २७।१० | श्र॰ १ श्रा॰ २ | श्र॰ १ श्रा॰ १ |

ॐ नमः परमात्मने ।

# प्रशस्तपादभाष्यम् ।

**प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः ।**
**पदार्थधर्मसंग्रहः प्रवक्ष्यते महोदयः ॥**

## न्यायकन्दलीटीका ।

अनादिनिधनं देवं जगत्कारणमीश्वरम् ।
प्रपद्ये सत्यसङ्कल्पं नित्यविज्ञानविग्रहम् ॥

ध्यानैकतानमनसो विगतप्रचाराः पश्यन्ति यं कमपि निर्मलमद्वितीयम् ।
ज्ञानात्मने विघटिताखिलबन्धनाय तस्मै नमो भगवते पुरुषोत्तमाय ॥

शास्त्रारम्भे(१) ऽभिमतां देवतां शास्त्रस्य प्रणेतारं गुरुं च(२) श्लोकस्य पूर्वार्द्धेन नमस्यति । प्रणम्येति। कर्मारम्भे हि देवता गुरवश्च नमस्क्रियन्ते इति शिष्टाचारोयम् । फलं च नमस्कारस्य विघ्नोपशमः न तावदयमफलः प्रेक्षावद्भिरनुष्ठेयत्वात् । अन्यफलोपि न कर्मारम्भे नियमेनानुष्ठीयेत अविघ्नेन प्रारिप्सितपरिसमाप्तेस्तदानीमपेक्षितत्वात् फलान्तरस्यानभिसंहितत्वात्(३) । ननु किं नमस्कारादेव विघ्नोपशमः उतान्यस्मादपि भवति न तावन्नमस्कारादेवेत्यस्ति नियमः असत्यपि नमस्कारे न्यायमीमांसाभाष्ययोः परिसमाप्तत्वात् यदा चान्यस्मादपि तदा नियमेनोपादानं निरुपपत्तिकम् । अत्रोच्यते । नमस्कारादेव विघ्नोपशमः कर्मारम्भे सद्भिर्नियमेन तस्योपादानात् । न च न्यायमीमांसाभाष्यकाराभ्यां न कृतो नमस्कारः किं तु तत्रानुपनिबद्धः कथमेषा प्रतीतिरिति चेत् कर्तुः शिष्टतयैव अस्तु वा तावदपरः

(१) ग्रन्थारम्भे-पा० १।४ पु० ।
(२) शास्त्रस्य च प्रणेतारं गुरुं-पा० ४ पु० ।
(३) अनभिसंहितत्वाच्च-पा० ४ पु० ।

प्रेक्षावान् म्लेच्छोऽपि तावद्गुर्वारम्भे कर्मणि न प्रवर्तते यावदिष्टान्न नमस्यति यदिमौ परमास्तिकौ पक्षिलशबरस्वामिनौ(१) नानुतिष्ठत इत्यसम्भावनमिदम् । अक्षरार्थो व्याक्रियते प्रणम्येति । प्रकर्षवाचिना प्रशब्देन भक्तिश्रद्धातिशयपूर्वकं नमस्कारमाचष्टे स हि धर्मोत्पादकस्तिरयत्यन्तरायबीजं नापरः अत एव कृतनमस्कारस्यापि कादम्बर्यादेरपरिसमाप्तिः विशिष्टनमस्काराभावात् तद्वैशिष्ट्यस्य कार्यगम्यत्वात् अत्रैव च नमस्कारः क्रियमाणोऽपि करिष्यमाणपदार्थधर्मसंग्रहप्रवचनापेक्षया पूर्वकालभावीति क्त्वाप्रत्ययेनाभिधीयते तदेकवाक्यतामापादयितुम् न त्वस्य पूर्वकालमात्रतामनूद्यते अनुवादे वा प्रयोजनाभावात् । हेतुमिति निर्विशेषणेन हेतुपदेन सर्वोत्पत्तिमतां निमित्ततां प्रतिजानीते । ईश्वरमिति विशिष्टदेवताया अभिधानम् लोके तद्विषयत्वेनैवास्य पदस्य प्रसिद्धेः लोकप्रसिद्धार्थोपसंग्रहत्वादस्य शास्त्रस्य । मुनिमिति शुद्धात्मज्ञानप्रदीपक्षपिततमसमत्युग्रतपसं साक्षादशेषतत्त्वावबोधयुक्तं(२) पुरुषविशेषमाह इत्थम्भूत एवार्थे मुनिशब्दस्य लोके दर्शनात् । कणादमिति तस्य कापोतीं वृत्तिमनुतिष्ठतो रथ्यानिपतितांस्तण्डुलकणानादाय प्रत्यहं कृताहारनिमित्ता संज्ञा अत एव निरवकाशः कणान् वा भक्षयत्वित्युपालम्भस्तत्रभवताम् । इदं हि तस्य नामेति तच्छब्दसंकीर्तनं कृतं प्रशस्तदेवेन न त्वियं तदुपनिबन्धवैशिष्ट्यख्यापनाय युक्तिरभिहिता तदुपनिबन्धवैशिष्ट्यस्य मन्वादिवाक्यवन्महाजनपरिग्रहादेव प्रतीतेः न चास्य कणादशास्त्रख्यापनेन किञ्चित्प्रयोजनमस्ति तावता तत्पूर्वकस्य ग्रन्थस्य वैशिष्ट्यसिद्धिरिति चेन्न अवश्यं तत्पूर्वकत्वेन स्वग्रन्थस्य वैशिष्ट्यसिद्धिः कर्तृदोषेणायथार्थस्यापि निबन्धनस्य सम्भावनास्पदत्वात् सम्भावितप्रामाण्ये प्रशस्तदेवे पुरुषदोषाणामसम्भव इति चेत् एवं तर्हि यथा कणाददर्शिनां तच्छिष्याणां पुरुषप्रत्ययादेव तथात्वनिश्चयात् तदुपनिबन्धे प्रवृत्तिरपरेषां च पुरुषान्तरसंवादादेवं प्रशस्तदेवकृतो(३)पनिबन्धेऽपि तच्छिष्याणामपरेषां च प्रवृत्तिर्भविष्यतीति नार्थस्तत्पूर्वकत्वख्यापनेन किमथ तर्हि कणादर्षेर्नमस्कारः विघ्नोपशमायेत्यु-

---

(१) पक्षिलशिवस्वामिनौ–पा॰ ४ पु॰ । अयमपि युक्त एव शबरो म्लेच्छभेदे च पानीये शङ्करेऽपि चेति मेदिनीकारोक्तेः ।

(२) जीवन्मुक्तं–इत्यधिकं २ पु॰ । (३) प्रशस्तकृतो–पा॰ २ पु॰ ।

क्तम् यथेश्वरस्य नमस्कारः सोपि हि न तत्पूर्वकत्वख्यापनाय व्यभिचारात् यस्य हि या देवता स तां प्रणम्य सर्वकर्माणि प्रस्तौति न कर्मणस्तत्पूर्वकत्वेन भक्तिश्रद्धामात्रनिबन्धनत्वान्नमस्कारस्य यथा मीमांसावार्तिककृता नमस्कृतः सोमावतंसः न च तत्पूर्विका मीमांसेत्यस्ति प्रवादः । अन्विति । ईश्वरप्रणामादनन्तरतां कणादप्रणामस्य परामृशति ईश्वरमादौ प्रणम्य ईश्वरप्रणामादनु पश्चात् कणादं प्रणम्येत्यर्थः । सम्बन्धप्रयोजनयोरनभिधाने श्रोता न प्रवर्तते प्रयोजनाधिगतिपूर्वकत्वात् सर्वप्रेक्षावत्प्रवृत्तेः तस्याप्रवृत्तौ च शास्त्रं कृतमकृतं स्यात् अतः शास्त्रारम्भमादधानः प्रेक्षावत्प्रवृत्त्यङ्गं तस्य सम्बन्धं प्रयोजनं चादौ श्लोकस्योत्तरार्द्धेन कथयति । पदार्थधर्मेत्यादि । पदार्था द्रव्यादयः षट् तेषां धर्माः साधारणासाधारणस्वभावाः संगृह्यन्ते संक्षेपेणाभिधीयन्ते ऽनेनेति पदार्थधर्मसंग्रहः । प्रवक्ष्यते इति । पदार्थधर्माणां संक्षेपेणाभिधायको ग्रन्थः प्रकृष्टो मया वक्ष्यते इति ग्रन्थकर्तुः प्रतिज्ञा । ग्रन्थस्य चेयं प्रकृष्टता यदन्यत्र ग्रन्थे विस्तरेणैतस्ततोभिहितानामिहैकत्र तावतामेव पदार्थधर्माणां ग्रन्थे संक्षेपेण कथनम् । एतदेव चास्यारम्भः सत्स्वप्युपनिबन्धान्तरेषु पदार्थधर्माणां संग्रहः पदार्थधर्मप्रतीतिहेतुः पदार्थधर्मप्रतीतिश्च न पुरुषार्थः सुखदुःखाप्तिहान्योः पुरुषप्रयोजकत्वात् तस्मादयमपुरुषार्थहेतुत्वादनुपादेय एवेत्याशङ्क्य तस्य पुरुषार्थफलतां प्रतिपादयितुमुक्तं महोदय इति महानुदयो महत्फलमपवर्गलक्षणं यस्मात् संग्रहादसौ महोदयः संग्रहः एतेन संग्रहस्य पदार्थधर्मैः सह वाच्यवाचकभावः तत्प्रतिपत्त्या च महोदयेन सह साध्यसाधनभावः सम्बन्धो दर्शितः ॥

ननु भोः क एष महोदयो नाम सवासनासमुच्छेदो ज्ञानोपरम इत्येके तथा च पठन्ति न प्रेत्य संज्ञास्तीति । तदयुक्तम् । सर्वतः प्रियतमस्यात्मनः समुच्छेदाय प्रेक्षावत्प्रवृत्त्यनुपपत्तेः बन्धविच्छेदपर्यायस्य मुक्तिशब्दस्यातदर्थत्वाच्च । निखिलवासनोच्छेदे विगतविषयाकारोपप्लवविशुद्धज्ञानोदयो महोदय इत्यपरे । तदयुक्तम् । कारणाभावे तदनुपपत्तेः भावनाप्रचयो हि तस्य कारणमिष्यते स च स्थिरैकाश्रयाभावाद्विशेषानाधायकः प्रतिक्षणमपूर्ववदुपजायमानो निरन्वयविनाशी लङ्घनाभ्यासवदनासादितप्रकर्षो न स्फुटाभज्ञानजननाय प्रभ-

वतीत्यनुपपत्तिरेव तस्य समलचित्तक्षणानां स्वाभाविक्याः सदृशारम्भणशक्तेर-सदृशारम्भं प्रत्यशक्तेश्चाकस्मादनुच्छेदात् किं च पूर्वक्षणाः स्वरसनिर्वाणाः अयमपूर्वो जातः सन्तानश्चैको न विद्यते बन्धमोक्षौ चैकाधिकरणौ विषयभे-देन वर्तेते य एव च प्रवर्तते प्राप्य च निवृत्तो भवति। प्रकृतिपुरुषविवेकदर्श-नादुपरतायां प्रकृतौ पुरुषस्य स्वरूपेणावस्थानं मोक्ष इत्यन्ये। तन्न। प्रवृत्ति-स्वभावायाः प्रकृतेरौदासीन्यायोगात् पुरुषार्थनिबन्धना तस्याः प्रवृत्तिः विवे-कख्यातिश्च पुरुषार्थः तस्यां सञ्जातायां सा निवर्तते कृतकार्यत्वादिति चेन्न अस्या अचेतनाया विमृश्यकारित्वाभावात् यथेयं कृतेपि शब्दाद्युपलम्भे पुन-स्तदर्थे प्रवर्तते तथा विवेकख्यातौ कृतायामपि पुनस्तदर्थे प्रवर्तिष्यते स्वभा-वस्यानपायित्वात्। नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिरित्यपरे। तदप्यसा-रम्। अग्रे निराकरिष्यमाणत्वात्। तस्मादहितनिवृत्तिरात्यन्तिकी महोदय इति युक्तम्। तस्याः सद्भावे किं प्रमाणं दुःखसन्ततिर्धर्मिणी अत्यन्तमुच्छि-द्यते सन्ततित्वाद्दीपसन्ततिवदिति तार्किकाः। तदयुक्तम्। पार्थिवपरमा-णुरूपादिसन्तानेन व्यभिचारात्। अशरीरं वाव सन्तं(१) प्रियाप्रिये न स्पृशत इत्यादयो वेदान्ताः प्रमाणमिति तु वयम्। भूतार्थानामेषामप्रामाण्यप्रसङ्ग इति चेन्न प्रत्यक्षेणानैकान्तिकत्वात्। अथ मतं भूतार्थप्रतिपादकं वचनमनुवा-दकं स्यात् ततश्चाप्रमाणत्वं प्रमाणान्तरसापेक्षत्वात् प्रमायां साधकतमत्वा-भावादिति न सिद्धार्थप्रतिपादकत्वमनुवादकत्वं प्रत्यक्षस्याप्यनुवादकत्व-प्रसङ्गात् किं त्वधिगताधिगन्तृत्वं ईदृशश्च वेदान्तानामर्थो यदयं भूतोपि प्रत्यक्षादेः प्रमाणान्तरस्य न विषयः कुतस्तेषामनुवादकता कुतश्च सापेक्ष-त्वम् स्मृतेरिव तेभ्यः पूर्वाधिगमसंस्पर्शेनार्थप्रतीतेरभावात् अत एव पुरुषवा-क्यमपि प्रमाणम् नहि तदपि वक्तृप्रामाण्योत्थापनेनार्थं प्रतिपादयति किन्त्व-नपेक्षिततद्व्यापारं स्वयमेव उत्पत्तिमात्र एव तदपेक्षणात् स्वाभाविकी हि पदानां पदार्थपरता स्वाभाविकी च पदार्थानामाकाङ्क्षासन्निधियोग्यतावता-मितरेतरान्वययोग्यता तेन यथा वेदे प्रमाणान्तरानपेक्षः शब्दः शब्दसाम-

(१) अशरीरमिति। वावसन्तमिति यङ्लुकि तेन संसारावस्थायां क्षणमात्रमशरीरतया नान्यथासिद्धिः यद्वा वा एवार्थे तेनाशरीरमेव वसन्तमित्यर्थः वावेति सम्बोधनं तेनाशरीरमेव सन्तं वर्तमानं वर्तमानकालस्य क्षणादधिकत्वे नोक्तदोष इति वर्द्धमानोपाध्यायाः।

भिधानशीलतया न तु तद्गुणाधिकरणत्वेन मृदङ्गादिशब्देषु तथाप्रतीत्यभावात्
अस्तु तर्ह्ययं दिशः कालस्य मनसो गुणस्तत्राह । श्रोत्रग्राह्यत्वादिति ।
किमुक्तं स्यात् । ये दिक्कालमनसामुभयवादिसिद्धाः संयोगादयस्ते श्रोत्रग्राह्या
न भवन्ति अयन्तु तद्ग्राह्यः तस्मान्न तद्गुणः दिक्कालमनसां विशेषगुणो नास्ति
अयन्तु विशेषगुण इतोपि तेषां न भवतीत्याह । वैशेषिकगुणभावा(१)च्चेति ।
शब्दो दिक्कालमनसां गुणो न भवति विशेषगुणत्वात् सुखादिवदिति प्रयो-
गः । नन्वेकस्मिन्नर्थेनेकसाधनोपन्यासो व्यर्थ एकेनैव तदर्थपरिच्छेदस्य कृत-
त्वादिति चेत् किमेकप्रमाणावसिते प्रमाणान्तरवैयर्थ्यं फलाभावात् पुरुषेणा-
नपेक्षितत्वाद्वा न तावत् फलं नास्ति पूर्ववदुत्तरत्रापि तदर्थप्रतीतिभावात्
नापि पुरुषस्यानपेक्षा सर्वत्र यत्रातिशयमाधुर्यात् प्रत्यनुभवं सुखोत्पत्तिस्तत्र
दृष्टेपि पुनःपुनर्दर्शनाकाङ्क्षा भवत्येव यथात्यन्तं प्रिये पुत्रादौ । यत्र त्वनपेक्षा
तत्रापि पूर्ववदुत्तरस्यापि कारणस्य सद्भावे सति प्रवृत्तस्य न वैयर्थ्यं तद्विषयप-
रिच्छेदेनैवार्थेनार्थवत्त्वात् पिष्टपेषणे त्वशक्यभङ्गता(२)प्राप्तौ फलमेव न भवति
अन्यदपि प्रमाणविषयपरिच्छेदमात्रफलमेवार्थक्रियाया विषयसाध्यत्वात् एक-
परिच्छिन्ने द्वितीयस्य साधकतमत्वाभाव इति चेन्न स्वकार्ये तस्यैव साधक-
तमत्वात् अन्यथा धारावाहिकं ज्ञानमप्रमाणं स्यात् विषयस्यानतिरेकात्
प्रतिज्ञानं च कालक्षणानामतिसूक्ष्माणामप्रतिभासनात् न चैवं सत्यनवस्था
उपायाभावे सति विरामादित्यलम् । ननु यदि नाम पृथिव्यादिद्रव्याष्टकगुणः
शब्दो न भवति तथाप्याकाशस्य सद्भावे किमायातं तत्राह । परिशेषादिति ।
गुणः शब्दो गुणश्च गुणिना विना न भवति न चैष पृथिव्यादीनां गुणः
द्रव्यान्तरं च नास्ति तस्माद्यस्यायं गुणस्तदाकाशमिति परिशेषादाकाश-
स्याधिगमे प्रतिपत्तौ लिङ्गमित्यर्थनिर्देशः । प्रयोगः पुनरेवम् । द्रव्यान्तरगुणः
शब्दो गुणत्वे सति पृथिव्याद्यष्टद्रव्यानाश्रितत्वात् । यस्तु द्रव्यान्तरगुणो
न भवति नासौ गुणत्वे सति पृथिव्याद्यष्टद्रव्यानाश्रितो यथा रूपादिरिति
व्यतिरेकी । सद्भावप्रतिपादकादेव प्रमाणादाकाशस्य शब्दगुणत्वं तावत् प्रतीतम्
सम्प्रति संख्यादिगुणत्वप्रतिपादनार्थमाह । शब्दलिङ्गाविशेषादिति । शब्दो

(१) वैशेषिकगुणाभावा-पा० १ पु० । मूलेपि तथैव क्वचित् । (२) अनिवृत्तित्वमिति यावत् ।

लिङ्गमाकाशस्य शब्दश्च सर्वत्राविशिष्ट एक इत्येकरूपमेवाकाशं सिद्ध्यति भेदप्रतिपादकप्रमाणाभावादित्यर्थः । ननु शब्दोऽपि तारतरादिरूपेण विविध एव सत्यं न तु तेन रूपेणास्य लिङ्गता किन्तु गुणत्वेन तच्चाविशिष्टं नाश्रयभेदावगमाय प्रभवति एकस्मादप्याश्रयात् कारणभेदेन तारतरादिभेदस्य शब्दस्योत्पत्त्यविरोधात् । तदनुविधानादेकपृथक्त्वमिति । एकत्वानुविधानादेकपृथक्त्वम् । अस्ति चाकाशे भेदप्रतिपादकप्रमाणाभावात् सर्वसिद्धमेकत्वं तेन पृथक्त्वमपि सिद्धमित्यर्थः । केचिद्वस्तुनो निजं स्वरूपमेवैकत्वं न तु संख्या विशेष इत्याहुः । तेषामेको घट इति सहप्रयोगानुपपत्तिः पर्यायत्वात् । येऽपि पदार्थानां स्वाभाविकमेव पृथक्त्वमित्याहुः तेषामपि प्रतियोग्यनुसन्धानरहितस्यैकत्वविकल्पवत् पृथक्त्वविकल्पोऽपि प्राप्नोति न चैवं स्यात् अयमस्मात् पृथगिति पृथक्त्वस्य विकल्पनात् तस्मान्न तयोरैकत्वम् । विभववचनात् परममहत्परिमाणमिति । द्रव्यत्वादाकाशस्य परिमाणयोगित्वे सिद्धे विभवान्महानाकाश इति सूत्रकारवचनात् परममहत्त्वमाकाशे सिद्धम् । यद्विभु तत्परममहद्यथात्मा विभु चाकाशं तस्मादेतदपि परममहत् । विभुत्वं सर्वगतत्वं तदाकाशस्य कुतः सिद्धमिति चेत् सर्वत्र शब्दोत्पादात् यद्याकाशं व्यापकं न भवति तदा सर्वत्र शब्दोत्पत्तिर्न स्यात् समवायिकारणाभावे कार्योत्पत्त्यभावात् दिवि भुव्यन्तरिक्षे चोपजाताः शब्दा एकार्थसमवेताः शब्दत्वात् श्रूयमाणाद्यशब्दवत् श्रूयमाणाद्यशब्दयोश्चैकार्थसमवायः कार्यकारणभावेन प्रत्येतव्यो व्यधिकरणस्यासमवायिकारणत्वाभावात् । शब्दकारणत्ववचनात् संयोगविभागाविति । संयोगाद्विभागाच्छब्दाच्च शब्दस्य निष्पत्तिरिति सूत्रेणाकाशगुणं शब्दं प्रति संयोगविभागौ कारणमित्युक्तं([1]) तेनाकाशे संयोगविभागौ सिद्धौ व्यधिकरणस्यासमवायिकारणत्वाभावात् । अतो गुणवत्त्वादनाश्रितत्वाच्च द्रव्यम् । यतः आकाशं गुणवत् अतो गुणवत्त्वाद् द्रव्यं घटादिवत् न केवलं गुणवत्त्वादाकाशं द्रव्यमनाश्रितत्वाच्च परमाणुवत् । समानासमानजातीयकारणाभावाच्च नित्यमिति । समानजातीयं समवायिकारणम् असमानजातीयमसमवायिकारणं निमित्तकारणं च तेषामभावान्नित्यम् । सर्वप्राणिनां शब्दोपलब्धौ निमित्तमिति । नन्वेवं तर्हि सर्वेषां सर्वशब्दोपलब्धिराकाशस्य सर्वत्राविशेषा-

---

(१) संयोगविभागावसमवायिकारणमित्युक्तं-पा० २ । ४ पु० ।

दत आह । श्रोत्रभावेनेति । किं पुनः श्रोत्रं तत्राह । श्रोत्रं पुनरिति । श्रूयतेऽनेनेति श्रवणं श्रवणं च तद्विवरं चेति श्रवणविवरं तदेव सञ्ज्ञा यस्य नभोदेशस्य स नभोदेशः श्रोत्रं तत्पिधाने शब्दस्यानुपलम्भात् । तस्य विशेषणमाह । शब्दनिमित्तेत्यादिना । शब्दनिमित्त उपभोगः सुखदुःखानुभवस्तस्य प्रापकाभ्यां धर्माधर्माभ्यामुपनिबद्धः सहकृत इति । अयमर्थः । यस्य बाह्यैकेन्द्रियग्राह्यविशेषगुणग्राहकं यदिन्द्रियं तत्तद्गुणकं यथा रूपग्राहकं चक्षू रूपाधिकरणं श्रोत्रं च तथाभूतस्य शब्दस्य ग्राहकं तस्मात्तदपि शब्दगुणकं शब्दश्चाकाशगुण इति निर्णीतं तेनाकाशमेव तावच्छ्रोत्रं तच्च व्यापकमपि न सर्वत्र शब्दमुपलम्भयति प्राणिनामदृष्टवशेन कर्णशष्कुल्यधिष्ठाननियतस्यैव तस्येन्द्रियत्वात् यथा सर्वगतत्वेप्यात्मनो देहप्रदेशे ज्ञातृत्वं नान्यत्र शरीरस्योपभोगार्थत्वात् । अन्यथा तस्य वैयर्थ्यात् । नन्वेवमपि बधिरस्य शब्दोपलब्धिः स्यात् । कर्णशष्कुलीसद्भावा(१)दत्राह । तस्य चेति । तस्याकाशस्य नित्यत्वेप्युपनिबन्धकयोर्धर्माधर्मयोः सहकारिभूतयोर्वैकल्यादभावाद्बाधिर्यम् । इतिशब्दः समाप्तौ ॥

**कालः परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्गम् । तेषां विषयेषु पूर्वप्रत्ययविलक्षणाना(२)मुत्पत्तावन्यनिमित्ताभावा(३)द्यदत्र निमित्तं स कालः । सर्वकार्याणां चो(४)त्पत्तिस्थितिविनाशहेतुस्तद्व्यपदेशात् । क्षणलवनिमेषकाष्ठाकलामुहूर्तयामाहोरात्रार्धमासमासर्त्वयनसंवत्सरयुगकल्पमन्वन्तरप्रलयमहाप्रलयव्यवहारहेतुः(५) । तस्य गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागाः । काललिङ्गाविशेषादेकत्वं सिद्धम् । तदनुविधानात् पृथक्त्वम् । कारणे काल इतिवचनात् परममहत्परिमाणम् । कारणप-**

(१) भावात्-पा· २ पु· ।
(२) प्रत्ययानां-इत्यधिकं ६ पु· ।
(३) निमित्तासम्भवाद्-पा· ६ पु· ।
(४) सर्वकार्याणामुत्पत्ति-पा· ५ । ६ पु· ।
(५) हेतुश्च-पा· ५ पु· ।

**रत्वा(१)दिवचनात् संयोगः । तद्विनाशकत्वाद्विभाग इति। तस्याकाशवद्द्रव्यत्वनित्यत्वे सिद्धे(२) काललिङ्गाविशेषादञ्जसैकत्वेपि सर्वकार्याणा(३)मारम्भक्रियाभिनिर्वृत्तिस्थितिनिरोधोपाधिभेदान्मणिवत्पाचकवद्वा नानात्वोपचार इति ॥**

कालस्य निरूपणार्थमाह । काल इति । दिग्विशेषापेक्षया यः परस्तस्मिन्नपर इति प्रत्ययः यश्चापरस्तस्मिन् पर इति प्रत्ययः परापरयोर्व्यतिकरो(४)व्यत्ययः तथा च युगपत्प्रत्ययोऽयुगपत्प्रत्ययश्च क्षिप्रप्रत्ययश्चिरप्रत्ययश्च काललिङ्गम् । ननु कालस्याप्रत्यक्षत्वात् तेन सह परापरादिप्रत्ययानां व्याप्तिग्रहणाभावात् कुतो लिङ्गत्वमत आह । तेषामिति । तेषां युगपदादिप्रत्ययानां विषयेषु द्रव्यादिषु पूर्वप्रत्ययविलक्षणानां द्रव्यादिप्रत्ययविलक्षणानामुत्पत्तावन्यस्य निमित्तस्याभावात् । एतदुक्तं भवति । द्रव्यादिषु विषयेषु पूर्वापरादिप्रत्यया जायन्ते न चैषां द्रव्यादयो निमित्तं तत्प्रत्ययविलक्षणत्वात् न च निमित्तमन्तरेण कार्यस्योत्पत्तिरस्ति तस्माद्यदत्र निमित्तं स काल इति । आदित्यपरिवर्तनाल्पीयस्त्वभूयस्त्वनिबन्धनो युवस्थविरयोः परापरव्यवहार इत्येके तदयुक्तम् । आदित्यपरिवर्तनस्य युवस्थविरयोः सम्बन्धाभावादसम्बद्धस्य निमित्तत्वे चातिप्रसङ्गात् । सहभावो यौगपद्यमित्यपरे । तदसङ्गतम् । कालानभ्युपगमे सहार्थाभावात् कस्यांचित् क्रियायां भावानामन्योन्यप्रतियोगित्वं सहार्थ इति चेन्न । अनुत्पन्नस्थितनिरुद्धाना(५)मन्योन्यप्रतियोगित्वाभावात् सहभवतां च प्रतियोगित्वे कालस्याप्रत्याख्यानमेवेत्युक्तम् । एवमयुगपदादिप्रत्यया अपि समर्थनीयाः । कालस्याभेदात् कथं प्रत्ययभेद इति चेत् सामग्रीभेदात् वस्तुद्वयस्योत्पादसद्भावयोर्यदेकेन ज्ञानेन ग्रहणं तत्सहकारिणा कालेन परापरप्रत्ययौ जन्यते भूयसामुत्पादव्यापारयोरेकग्रहणसहकारिणा युगपत्प्रत्ययः कार्यस्योत्पादविनाशयोरन्तर्वर्तिनां क्रियाक्षणानां(६) भूयस्त्वाल्पीयस्त्वग्रहणसहकारिणा चिरक्षिप्रप्रत्ययाविति यथासम्भवं वाच्यम् । ननु तत्तन्निमित्तनिबन्धन एवास्तु

---

(१) कारणमहत्त्वा–पा॰ ५ पु॰ । (२) तस्याकाशवद्द्रव्यत्वनित्यत्वे सिद्धे–इति नास्ति १ पु॰ ।
(३) पूर्वभूतकार्याणां–पा॰ ५ पु॰ । (४) व्यतिकरयोः–पा॰ २ पु॰ ।
(५) स्थितविरुद्धानां–इति क्वचित् । (६) क्रियालक्षणानां–पा॰ १ पु॰ ।

प्रत्ययभेदः कृतं कालेन । न । असति तस्मिन् वस्तूत्पादाभावात् । न तावदत्यन्तसतो गगनस्योत्पादः नाप्यत्यन्तासतो नरविषाणस्य किन्तु प्रागसतः कालासत्त्वे चाभावविशेषणस्य प्राक् शब्दार्थस्याभावान्नायं विशेषः सिद्ध्यतीति न कस्यचिदुत्पत्तिः स्यात् । अप्रत्यक्षेण कालेन कथं विशिष्टा प्रतीतिरिति चेत् तत्राह कश्चित् विशिष्टप्रत्ययस्योत्पत्ताविन्द्रियवत् कारणत्वं कालस्य न तु दण्डादिवद्विशेषणत्वमिति । तदसारम् । बोधैकस्वभावस्य ज्ञानस्य विषयसम्बन्धमन्तरेण विशेषान्तराभावात् तस्मादन्यथोच्यते युवस्थविरयोः शरीरावस्थाभेदेन तत्कारणतया कालसंयोगे ऽनुमिते सति पश्चात् तयोः कालविशिष्टतावगितः प्रत्येतुरेकत्वात् प्रमाणान्तरोपनीतस्यापि विशेषणत्वाविरोधात् यथा सुरभिचन्दनमिति यथा वा मीमांसकानामघटं भूतलमिति घटादिषु तु मूर्तद्रव्यत्वेनावस्थाभेदेन वा शरीरवत्कालसम्बन्धे ऽनुमिते तद्विशिष्टो युगपदादिप्रत्ययो जातः पश्चात् कार्यत्वाद्विप्रतिपन्नं प्रति काललिङ्गत्वमित्यनवद्यम् । सर्वकार्याणां चोत्पत्तिस्थितिविनाशहेतुः । अत्र युक्तिमाह । तद्व्यपदेशादिति । तेन कालेनोत्पत्त्यादीनां व्यपदेशात् उत्पत्तिकालो विनाशकाल इत्यादिव्यपदेशात् कालस्य तत्र हेतुत्वमित्यर्थः । कार्यान्तरमपि तस्य कथयति । क्षणलवेत्यादि । निमेषस्य चतुर्थो भागः क्षणः क्षणद्वयेन लवः अक्षिपक्ष्मकर्मोपलक्षितकालो निमेष इत्यादि गणितशास्त्रानुसारेण प्रत्येतव्यम्(१) । एवं धर्मिणि सिद्धे तस्य गुणान् कथयति । तस्य गुणा इति । कालस्य द्रव्यत्वात् संख्यादियोगे सिद्धे तद्विशेषप्रतिपादनार्थमाह । काललिङ्गाविशेषादिति । कालस्य लिङ्गानां युगपदादिप्रत्ययानामविशेषादेकत्वं कालस्य भेदे प्रमाणान्तराभावादित्यर्थः । ननु युगपदादिप्रत्ययभेद एव तद्भेदप्रतिपादकः नैवम् कालाभेदेपि सहकारिभेदात् प्रत्ययभेदोपपत्तेः । तदनुविधानात् पृथक्त्वमिति । एकत्वस्य पृथक्त्वेनानुविधानं साहचर्यनियमः तेनैकत्वादेकपृथक्त्वसिद्धिः । कारणे काल इति वचनात् परममहत्परिमाणमित्यनेन कारणे कालाख्येति सूत्रं लक्षयति । युगपदादिप्रत्ययानां कारणे कालाख्या कालसञ्ज्ञेति सूत्रार्थः ।

---

(१) तत्र उत्पन्नं द्रव्यं यावदगुणं उत्पन्ने चान्त्यतन्तुसंयोगे वा यावन्न पट उत्पन्ने कर्मणि यावच्च विभागस्तावत् कालः क्षणः । अथवा सामग्री कार्यरहिता क्षण इति संक्षेपः । अक्षिपक्ष्मकर्मकं निमेष इत्यादि गणितशास्त्रानुसारेण माह्यमिति किरणावल्यामुदयनाचार्याः ।

तेन व्यापकः कालो लभ्यते युगपदादिप्रत्ययानां सर्वत्र भावादित्यभिप्रायः। कारणपरत्वादिवचनात् संयोग इति। कारणपरत्वात् कारणापरत्वाच्च परत्वापरत्वे इति सूत्रे कारणपरत्वशब्देन कालपिण्डसंयोगोऽभिहितः। तेनास्य संयोगगुणत्वं सिद्धम्। तद्विनाशकत्वाद्विभाग इति। तस्य संयोगस्य कृतकत्वादवश्यं विनाशिनो विभागो विनाशकः सर्वत्राश्रयविनाशाभावादतः काले विभागसिद्धिर्व्यधिकरणस्य विभागस्याविनाशकत्वात्। तस्याकाशवद्द्रव्यत्वनित्यत्वे सिद्धे। यथा गुणवत्त्वादनाश्रितत्वाच्चाकाशं द्रव्यं तथा कालोपि यथा समानासमानजातीयकारणाभावान्नित्यमाकाशं तथा कालोपि। यद्येकः कालः कथं तत्रानेकव्यपदेश इत्याह। काललिङ्गाविशेषादिति। काललिङ्गानां परापरादिप्रत्ययानामविशेषाद्भेदाप्रतिपादकत्वादञ्जसा मुख्यया वृत्त्या कालस्यैकत्वेपि सिद्धे नानात्वोपचारान्नानात्वव्यपदेशः। कुतः। सर्वेषां कार्याणामारम्भ उपक्रमः क्रियाया अभिनिर्वृत्तिः क्रियायाः परिसमाप्तिः स्थितिः स्वरूपावस्थानं निरोधो विनाशः एषामुपाधीनां भेदान्नानात्वव्यपदेशः यथैको मणिः स्फटिकादिर्नीलाद्युपाधिभेदान्नील इति पीत इति व्यपदिश्यते तथा कालोप्येक एवोपाधिभेदादारम्भकाल इति क्रियाभिव्यक्तिकाल इति निरोधकाल इति व्यपदिश्यते इत्यर्थः। मणेरुपाधिसम्बन्धो न वास्तवः कालस्य तु क्रियासम्बन्धो वास्तव इति प्रतिपादयितुं दृष्टान्तान्तरमाह। पाचकेति (१)। यथैकस्य पुरुषस्य पचनादिक्रियायोगात् पाचक इति पाठक इति व्यपदेशः तथा कालस्यापि न तु प्रारम्भादिक्रियैव कालो विलक्षणबुद्धिवेद्यत्वादिति॥

**दिक् पूर्वापरादिप्रत्ययलिङ्गा। मूर्तद्रव्यमवधिं कृत्वा मूर्तेष्वेव द्रव्येष्वेतस्मादिदं(२) पूर्वेण दक्षिणेन पश्चिमेनोत्तरेण पूर्वदक्षिणेन दक्षिणापरेण अपरोत्तरेण(३) उत्तरपूर्वेण चाधस्तादुपरिष्टाच्चेति(४) दश प्रत्यया यतो भवन्ति(५) सा दिगिति। अन्यनिमित्तास-**

---

(१) पाचकवद्वेति क्वचित्। (२) द्रव्येषु तस्मादिदं–पा॰ ५ पु॰।
(३) दक्षिणपश्चिमेन पश्चिमोत्तरेण–पा॰ ५ पु॰। (४) उपरिष्टादिति–पा॰ ५ पु॰।
(५) प्रत्ययापन्ना भवति–पा॰ ५ पु॰। प्रत्यया भवन्ति यतः–पा॰ ६ पु॰।

**म्भवात्। तस्यास्तु गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागाः कालवदेते सिद्धाः । दिग्लिङ्गाविशेषादञ्जसैकत्वेपि दिशः परममहर्षिभिः(१) श्रुतिस्मृतिलोकसंव्यवहारार्थं(२) मेरुं प्रदक्षिणमावर्तमानस्य भगवतः सवितुर्ये संयोगविशेषाः लोकपाल(३)परिगृहीतदिक्प्रदेशानामन्वर्थाः प्राच्यादिभेदेन दशविधाः सञ्ज्ञाः कृताः अतो(४) भक्त्या दश दिशः सिद्धाः । तासामेव देवतापरिग्रहात्(५) पुनर्दश सञ्ज्ञा भवन्ति । (६)माहेन्द्री वैश्वानरी याम्या(७) नैर्ऋती वारुणी वायव्या कौवेरी(८) ऐशानी ब्राह्मी नागी चेति ॥**

युगपदादिप्रत्ययलिङ्गत्वमिव कालस्य पूर्वापरादिप्रत्ययलिङ्गत्वं दिशो वैधर्म्यमिति प्रतिपादयन्नाह । दिक् पूर्वापरादिप्रत्ययलिङ्गेति । पूर्वमित्यपरमित्यादिप्रत्ययो लिङ्गं यस्या दिशः सा तथोक्ता । एतदेव दर्शयति । मूर्तद्रव्यमित्यादिना । अमूर्तस्य द्रव्यस्य नावधित्वं नापि पूर्वापरादिप्रत्ययविषयत्वमस्त्यनवच्छिन्नपरिमाणत्वात् अत इदमुक्तं मूर्तद्रव्यमवधिं कृत्वा मूर्तेष्वेव द्रव्येष्विदमस्मात् पूर्वेणेत्यादिप्रत्यया यतो भवन्ति सा दिगिति । एतस्मादिदं पूर्वमित्यस्मिन्नेवार्थे पूर्वेणेति निर्देशः प्रातिपदिकार्थे तृतीयोपसंख्यानात् । ननु पूर्वापरादिप्रत्ययानां कार्यत्वात् कारणमनुमीयते तत्तु दिगेवेति कुतो निश्चयस्तत्राह । अन्यनिमित्तासम्भवादिति । न तावत्पूर्वापरादिप्रत्ययानां द्रव्यमात्रं निमित्तं यथाकथञ्चिदवस्थिते द्रव्ये तेषामुत्पत्तिप्रसङ्गात् । परस्परापेक्षया द्रव्ययोरुत्पत्तिनिमित्तत्वेपि स एव दोषः उभयाभावप्रसङ्गश्चाधिकः क्रियागुणादिनिमित्तत्वे च समानगुणक्रियादिषु प्रत्ययविशेषो न स्यात् तेन यदेषां निमित्तं सा दिगिति यच्चैतस्मादिदमिति पञ्चमी प्रयुज्यते अन्यथा

(१) परमर्षिभिः-पा० ६ पु० । (२) लोकव्यवहारार्थं-पा० ५ पु० ।
(३) संयोगास्तेषां लोकपाल-पा० ५ पु० । संयोगविभागा इति टीकासम्मतः ।
(४) ततो-पा० ५ पु० । (५) परिगृहीतत्वात्-पा० ६ पु० । परिग्रहवशात्-पा० ५ पु० ।
(६) तद्यथा-इत्यधिकम् ६ पु० । (७) यामी-पा० ५ पु० ।
(८) वायवी चान्द्रमसी-पा० ५ पु० ।

सापि निर्विषया स्यात् अवधावियं पञ्चमीति चेत् सत्यं किन्त्ववधित्वं दिग-पेक्षया न तु द्रव्यमात्रस्य सर्वत्राविशेषप्रसङ्गात् । तस्या अप्रत्यक्षत्वेपि काल-वद्विशिष्टप्रत्ययहेतुत्वं वाच्यम् गुणवत्त्वं द्रव्यलक्षणं तदस्यामस्तीति प्रति-पादयन्नाह । तस्यास्तु गुणा इत्यादि । कालवदेते सिद्धाः । यथा काललिङ्गावि-शेषात् कालस्यैकत्वं सिद्धं तथा दिग्लिङ्गाविशेषाद्दिश एकत्वं यथा तदनु-विधानात् काले पृथक्त्वं तथा दिशि यथा कारणे काल इतिवचनात् परम-महत्परिमाणम् तथा कारणे दिगितिवचनाद्दिशः परममहत्परिमाणम् सर्वत्र तत्कार्यस्य पूर्वापरादिप्रत्ययस्य भावात् यथा कारणपरत्वाच्चेति कालस्य संयोगगुणत्वं प्रतिपादितम् तथा दिशोपि यथा संयोगविनाशक-त्वात् काले विभागः सिद्धस्तथा दिशीत्यतिदेशार्थः । ननु दिग्लिङ्गावि-शेषो न सिद्धः पूर्वापरादिप्रत्ययानां परस्परतो भेदात् तथा च सति दिशो भेद इति युक्तम् । न । एकस्मिन्नेवार्थे युगपद्वस्त्वन्तरापेक्षया पूर्वापरादिप्रत्य-योत्पत्तेः दिग्भेदे हि यत्पूर्वं न तत्र पश्चिमप्रत्ययो भवेत् सर्वदिक्सम्बन्ध-स्तस्यास्तीति चेत् तर्हि सर्वार्थेषु सर्वापेक्षया सर्वेषां सर्वे प्रत्ययाः प्रसज्येरन् । न चैवम् । तस्मादेका दिक् प्रत्ययभेदस्तूपाधिभेदात् । पूर्वमादित्यसंयोगस्य तदार्जवावस्थितस्य च द्रव्यस्यान्तराले दक्षिणेति अस्तमयसंयोगस्य तदार्जवावस्थितस्य च द्रव्यस्यान्तराले पश्चिमेति यत्रादित्यसंयोगो न दृश्यते तत्र मध्याह्नसंयोगप्रगुणावस्थितद्रव्यापेक्षयोत्तरव्यवहारः तासामन्तरालेषु पूर्वदक्षिणादिव्यवहार इत्युपपद्यते प्रतीतिभेदः । आदित्यसंयोगनिबन्धन एवास्तु प्रत्ययः । न । तस्य मूर्तद्रव्यसंयोगाभावात् असम्बद्धस्य च प्रत्ययहेतु-त्वासम्भवात् एतदेव दर्शयति । दिग्लिङ्गाविशेषादिति । दिश एकत्वे स्थिते महर्षिभिः प्राच्यादिभेदेन दशविधाः सञ्ज्ञाः कृताः कीदृश्यस्ता अन्वर्थाः अनु-गतोर्थो यासामिति ता अन्वर्थाः केषामर्थस्तास्वनुगतः लोकपालैरिन्द्रादिभिः परिगृहीतानां दिक्प्रदेशानां सवितुर्ये संयोगविभागास्तेषामित्यध्याहारः । तथाहि प्रथममस्यामञ्चति सवितेति प्राची । अवागञ्चतीति अवाची । प्रत्य-गञ्चतीति प्रतीची । उदगञ्चतीति उदीची । किंविशिष्टस्य सवितुर्मेरुं प्रदक्षि-णमावर्तमानस्य मेरुं प्रदक्षिणं परिभ्रमतः किमर्थं संज्ञाः कृताः श्रुतिः स्मृतिश्च लोकश्च तेषां सम्यग्व्यवहारार्थं श्रौतो व्यवहारः न प्रतीचीशिराः शयीते-

त्यादिः । स्मार्तो व्यवहारः आयुष्यं प्राङ्मुखो भुङ्क्ते इत्यादिः । लोकव्यवहारः पूर्वं गच्छ दक्षिणमवलोकयेत्यादिः । यतो दशसञ्ज्ञाः कृताः ततो भक्त्योपचारेण दश दिशः सिद्धाः व्यवस्थिताः । माहेन्द्र्यादिसञ्ज्ञास्तु नार्थान्तरविषयाः किन्तु तासामेव निमित्तान्तरवशात् प्रवर्तन्ते इत्याह । तासामेवेत्यादि । महेन्द्रस्येयमिति माहेन्द्री । वैश्वानरस्येयं वैश्वानरीत्यादि सर्वच निर्वचनीयम् ॥

**आत्मत्वाभिसम्बन्धादात्मा । तस्य सौक्ष्म्यादप्रत्यक्षत्वे सति(१) करणैः शब्दाद्युपलब्ध्यनुमितैः श्रोत्रादिभिः समधिगमः क्रियते । वास्यादीनां(२) करणानां कर्तृप्रयोज्यत्व(३)दर्शनात् शब्दादिषु प्रसिद्ध्या च प्रसाधकोऽनुमीयते । न शरीरेन्द्रियमनसामज्ञत्वात्(४) । न शरीरस्य चैतन्यं घटादिवद्भूतकार्यत्वात् मृते चासम्भवात् । नेन्द्रियाणां करणत्वात् उपहतेषु विषयासान्निध्ये चानुस्मृति(५)दर्शनात् । नापि मनसः करणान्तरानपेक्षित्वे युगपदालोचनस्मृति(६)प्रसङ्गात् स्वयं करणभावाच्च । परिशेषा(७)दात्मकार्यत्वात्(८) तेनात्मा समधिगम्यते शरीरसमवायिनीभ्यां च हिताहितप्राप्तिपरिहारयोग्याभ्यां प्रवृत्तिनिवृत्तिभ्यां (९) रथकर्मणा सारथिवत् प्रयत्नवान् विग्रहस्याधिष्ठातानुमीयते प्राणादिभिश्चेति । कथं शरीरपरिगृहीते(१०) वायौ विकृतकर्मदर्शनाद्भस्त्राध्मापयितेव निमेषोन्मेषकर्मणा नियतेन दारुयन्त्रप्रयोक्तेव देहस्य वृद्धिक्षत-**

(१) ऽपि–पा॰ ५ पु॰ । (२) वास्यादीनामिव–पा॰ ६ । ७ पु॰ । (३) प्रयोज्यत्व–पा॰ १ पु॰ ।
(४) अज्ञानत्वात्–पा॰ ५ पु॰ । न शरीरेन्द्रियमनसां चैतन्यमज्ञत्वात्–पा॰ १ पु॰ ।
(५) चात्र स्मृति–पा॰ १ पु॰ ।
(६) युगपदालोचनानुस्मृति–पा॰ ५ पु॰ ।
(७) पारिशेष्या–पा॰ ५ । ६ पु॰ ।
(८) आत्मकार्यं ज्ञानं–पा॰ ६ पु॰ ।
(९) प्रवृत्तिनिवृत्तिभ्यां–इति नास्ति १ पु॰ । (१०) विगृहीते–पा॰ ५ पु॰ ।

भग्नसंरोहणादिनिमित्तत्वात्(१)गृहपतिरिव अभिमत-विषयग्राहककरणसम्बन्धनिमित्तेन मनःकर्मणा गृह-कोणेषु पेलकप्रेरक इव(२) दारकः नयनविषयालोच-नानन्तरं रसानुस्मृतिक्रमेण रसनविक्रियादर्शनादने-कगवाक्षान्तर्गतप्रेक्षक(३)वदुभयदर्शी कश्चिदेको विज्ञा-यते। सुखदुःखेच्छाद्वेषप्रयत्नैश्च गुणैर्गुण्यनुमीयते ते च न शरीरेन्द्रियगुणाः(४) कस्मादहङ्कारेणैकवाक्यताभा-वात् प्रदेशवृत्तित्वादयावद्द्रव्यभावित्वाद् बाह्ये-न्द्रियाप्रत्यक्षत्वा(५)च्च तथाहंशब्देनापि पृथिव्यादि-शब्दव्यतिरेकादिति। तस्य गुणाः बुद्धिसुखदुःखेच्छा-द्वेषप्रयत्नधर्माधर्मसंस्कारसंख्यापरिमाणपृथक्त्वसंयोग-विभागाः। आत्मलिङ्गाधिकारे बुद्ध्यादयः प्रयत्नान्ताः सिद्धाः(६)। धर्माधर्मावात्मान्तरगुणानामकारणत्वव-चनात्। संस्कारः स्मृत्युत्पत्तौ कारणवचनात्। व्यव-स्थावचनात्(७) संख्या पृथक्त्वमप्यत एव(८) तथा चात्मे-तिवचनात् परममहत्परिमाणम्। सन्निकर्षजत्वात् सुखादीनां संयोगः। तद्विनाशकत्वाद्विभाग इति॥

यस्य तत्त्वज्ञानं निःश्रेयसाय घटते विपर्ययज्ञानं संसारहेतुर्यदर्थानि च भूतानि तत्प्रतिपादनार्थमाह। आत्मत्वाभिसम्बन्धादात्मेति। आत्मत्वं नाम सामान्यं तदभिसम्बन्धादात्मेतिव्यवहारः इदमस्येतरेभ्यो वैधर्म्यम्। ननु दृश्यस्य सत्त्वं तदाकारसंवेदनेन व्याप्तं न चात्माकारं कस्यचित्संवेद-

---

(१) संरोहणाभ्यां-पा० ६ पु०।
(२) गृहकोणव्यवस्थितपेलक इव प्रेरक इव-पा० ५ पु०।
(३) प्रेरक-पा० ५ पु०।
(४) विशेषगुणाः-पा० ५ पु०।
(५) ग्राह्यत्वा-पा० ५ पु०।
(६) प्रयत्नान्ताश्च प्रसिद्धाः-पा० ६ पु०।
(७) वचनाभिसम्बन्धात्-पा० ५ पु०।
(८) मत एव-पा० १ पु०।

नमस्ति अतो व्यापकानुपलब्ध्या तस्य सत्त्वमेव निराक्रियते कुतो धर्मनिरूपणमित्याशङ्क्य तत्सद्भावे बाधकं प्रमाणं नास्ति प्रत्यक्षानुपलब्धेरन्यथासिद्धत्वात् साधकं च प्रमाणमनुमानमस्तीति प्रतिपादयन्नाह । तस्येति । प्रत्यक्षोपलब्धियोग्यताविरहः सौक्ष्म्यम् । तस्मादप्रत्यक्षस्यात्मनः करणैः शब्दाद्युपलब्धयः करणसाध्याः क्रियात्वाच्छिदिक्रियावदित्यनुमितैः श्रोत्रादिभिः समधिगमः क्रियते । कुत इत्याह । वास्यादीनां(१) करणानां कर्तृप्रयोज्यत्वदर्शनात् । यत्करणं तत् केनचित् कर्त्रा प्रयुज्यते कार्ये व्यापार्यते(२) यथा वास्यादिकं वर्धकिणा । करणं च श्रोत्रादिकं तस्मात् केनचित् प्रयोक्तव्यं य एषां प्रयोक्ता स आत्मा । आकाशस्य श्रोत्रस्य यद्यप्यात्मना सह साक्षात् सम्बन्धो नास्ति विभुत्वात् तथाप्यात्मना तस्य प्रयोज्यत्वमन्तःकरणाधिष्ठानद्वारेण यथा हस्तेन सन्दंशयोगिना तत्संयुक्तस्यायःपिण्डस्य संयोगः करणत्वं च श्रोत्रादीनां नियतार्थस्य ग्राहकत्वात् प्रदीपवत् । यद्यप्यात्मा अहं ममेति स्वकर्मोपार्जितकायकरणसम्बन्धोपाधिकृतकर्तृता(३)स्वामित्वरूपसम्भिन्नो मनसा संवेद्यते तथाप्यप्रत्यक्षत्ववाचोयुक्तिर्बाह्येन्द्रियाभिप्रायेण । शब्दादिषु प्रसिद्ध्या च प्रसाधकोऽनुमीयते । शब्दादिषु विषयेषु प्रसिद्धिर्ज्ञानं तच्चापि प्रसाधको ज्ञातानुमीयते । ज्ञानं क्वचिदाश्रितं क्रियात्वात् छिदिक्रियावत् यत्रेदमाश्रितं स आत्मा । अथेदं स्वयमेव जानाति न पराश्रितमिति चेत् किमिदं नित्यं प्रतिक्षणविनाशि वा यदि नित्यं सञ्ज्ञाभेदमात्रं अथ क्षणिकं चिरानुभूतस्य न स्मरणं प्रतिपत्तृभेदात् यत्तु कार्यकारणभावात् पूर्वक्षणानुभूतस्योत्तरेण स्मरणं यत् पुनः पित्रानुभूतस्य पुत्रेणास्मरणं तत्र पितृपुत्रज्ञानयोः कार्यकारणभावाभावात् शरीरयोश्च तथाभूतयोरचेतनत्वात् । तदयुक्तम् । आत्माभावे कार्यकारणभावस्यानिश्चयात् कारणविज्ञानकाले कार्यज्ञानमनागतं तत्काले च कारणमतीतं न च ताभ्यामन्यः कश्चिदेको द्रष्टास्तीति कस्तयोः क्रमभाविनोः कार्यकारणभावं प्रतीयात् । अथ मतं स्वात्मग्राहिणी पूर्वा बुद्धिः स्वात्माव्यतिरिक्तं स्वस्य कारणत्वमतिरूपं(४) गोचरयति । उत्तरापि बुद्धिः स्वरूपविषया तदव्यतिरिक्तमात्मीयं कार्यत्वमपि गृह्णाति ताभ्यां च प्रत्येक-

(१) वास्यादीनामिव-पा॰ २ पु॰ ।  (२) व्याप्रियते-पा॰ १ पु॰ ।
(३) कर्तृत्व-पा॰ २ पु॰ ।  (४) अतिरूपि-पा॰ १ पु॰ ।

मुपात्तं कारणत्वं कार्यत्वं च तदुभयजनितैकवासनाबलभुवा विकल्पेनाध्यवसीयते इति चेत् अहो कुसृष्टिकल्पना पूर्वोत्तरधियौ स्वात्ममात्रनियते कुतस्तस्याः कारणमहमस्याश्चास्मि कार्यमिति प्रतीयेताम् परस्परवार्तानभिज्ञत्वात् ताभ्यामगृहीतं कुतोऽध्यवस्यति तस्यानुभवानुसारित्वात् । भवतु पराश्रितं ज्ञानं तदधिकरणं तु शरीरमिन्द्रियं मनो वा भविष्यति तत्राह । न शरीरेन्द्रियमनसामिति । उत्तरवाक्यस्थितं चैतन्यमितिपदमिह सम्बद्ध्यते । शरीरेन्द्रियमनसां चैतन्यं न भवति कुतस्तत्राह । अज्ञत्वादिति । ज्ञानं प्रति समवायिकारणत्वाभावादित्यर्थः । नन्वेतदपि साध्याविशिष्टमित्याशङ्क्याह । न शरीरस्येति । चैतन्यं शरीरस्य न भवति घटादिवच्छरीरस्य भूतकार्यत्वात् यद्भूतकार्यं न तच्चेतनं यथा घटः भूतकार्यं च शरीरं तस्मादेतदप्यचेतनम्(१) । युक्त्यन्तरमाह । मृते चासम्भवादिति । मृते शरीरे चैतन्यस्यासम्भवादित्यनेनायावद्द्रव्यभावित्वं विवक्षितं चैतन्यं शरीरस्य विशेषगुणो न भवति अयावद्द्रव्यभावित्वात् संयोगवत् । अत एव तत्कारणान्यप्यचेतनानि तेषां चैतन्ये कार्येपि चैतन्यं स्यात् एकस्मिन् शरीरे ज्ञातृबहुत्वं च प्राप्नोति ततश्चैकाभिप्रायेण प्रवृत्तिनियमाभावादिदोषः । नेन्द्रियाणां करणत्वादिति । इन्द्रियाण्यचेतनानि करणत्वाद् दण्डवत् । हेत्वन्तरं च समुच्चिनोति । उपहतेष्विति । विनष्टेष्वपीन्द्रियेषु पूर्वानुभूतोर्थः स्मर्यते न चानुभवितरि विनष्टे स्मरणं युक्तं तस्मान्नेन्द्रियगुणो ज्ञानं किं च विषयस्य पूर्वानुभूतस्यासान्निध्येपि स्मृतिर्दृष्टा न च बाह्येन्द्रियाणां प्राप्यकारित्वात् तस्मात् स्मृतिस्तावन्नेन्द्रियाणां तदभावादनुभवोपि न स्यात् अन्यस्यानुभवे ऽन्यस्यास्मरणादित्यर्थः । अत एव विषयस्यापि न चैतन्यं नष्टे विषये तत्स्मरणायोगात् इतोपि न तस्य चैतन्यं तद्देशज्ञानस्य तज्जन्यस्य च सुखादेरननुभवात् बुद्धिपूर्वकचेष्टाविशेषाभावाच्च न चेन्द्रियचैतन्ये विषयचैतन्ये च रूपमद्राक्षं रसमन्वभवं स्पर्शं स्पृशामि गन्धं घ्रास्यामीति रूपादिप्रत्ययानामेकैककर्तृत्वप्रतिपत्तिसम्भवः रूपादीनां चक्षुरादीनां च भेदात् । अस्तु तर्हि मनोगुणो ज्ञानं तस्य सर्वविषयत्वे नित्यत्वे च प्रतिसन्धानाद्युपपत्तेस्तत्राह । नापि मनस इति । मनो यदि चक्षुरादिविविक्तं करणान्तरमपेक्ष्य रूपादीन् प्रत्येति सञ्ज्ञाभेद-

(१) एतदपि न चेतनम्-पा० २।

मात्रे विवादः यदपेक्षणीयं तन्मनो यच्च ज्ञानाधिकरणं मनः सोऽस्माकमात्मेति । अथ नापेक्षते करणान्तरं तदा रूपरसादिष्विन्द्रियसम्बद्धेषु युगपदालोचनानि प्रसज्यन्ते कारणयौगपद्यात् । कारणान्तरापेक्षायां तु तस्याणुत्वे सर्वेन्द्रियेषु सान्निध्याभावाद्युगपदालोचनानुत्पत्तिः । अथान्तःकरणाभावो युगपत्स्मरणानि स्युरपेक्षणीयाभावात् करणापेक्षायां तु तत्संयोगस्य युगपदसामर्थ्यात् क्रमेण स्मृत्युत्पत्तिः । यत्तूक्तं केनचिदेकस्य नित्यस्य क्रमयौगपद्याभ्यामकरणमिति । तदयुक्तम् । युगपत्करणासम्भवादुत्तरकालमकरणं च कर्तव्याभावात् न च तावता तस्य सत्त्वमर्थक्रियाकारित्वव्यतिरिक्तस्य सत्त्वस्येष्टत्वात्(१) । इतोपि मनोगुणो ज्ञानं न भवति मनसः स्वयंकरणत्वादित्याह । स्वयंकरणभावाच्चेति । मनश्चेतनं न भवति करणत्वाद् घटादिवदिति । असिद्धं मनसः करणत्वं कर्तृत्वाभ्युपगमादिति चेत् मनःकर्तृत्वे रूपादिप्रतीतौ चक्षुरादिवत् सुखादिप्रतीतौ करणान्तरं मृग्यं क्रियायाः करणमन्तरेणानुपजननात् तथा सति च सञ्ज्ञाभेदमात्रं कर्तुः करणस्य चोभयोरपि सिद्धत्वात् इतोप्यचेतनं मनो मूर्तत्वाल्लोष्टवत् । यदि शरीरेन्द्रियमनसां गुणो ज्ञानं न भवति तथाप्यात्मसिद्धौ किमायातं तत्राह । परिशेषादिति । ज्ञानं तावत् कार्यत्वात् कस्यचित् समवायिकारणस्य कार्यं शरीरेन्द्रियमनसां च तदाश्रयत्वं प्रतिषिद्धम् न चान्येषु वक्ष्यमाणेन न्यायेन ज्ञानकारणत्वं प्रति शक्तिरस्ति अतः परिशेषादात्मकार्यं ज्ञानं आत्मकार्यत्वात् तेन ज्ञानेनात्मा समधिगम्यते इत्युपसंहारः । ननु सर्वमेतदसम्बद्धं क्षणिकत्वेनाश्रयाश्रयिभावाभावात् तथाहि सत्त्वमर्थक्रियाकारित्वं तच्च क्रमयौगपद्याभ्यां व्याप्तम् क्रमाक्रमात्मकस्य प्रकारान्तरस्यासम्भवात् अनेककार्यक्रियाणामनेककालता हि क्रमः यौगपद्यं चैककालता न चैकानेकाभ्यामन्यः प्रकारोस्ति परस्परविरुद्धयोरेकप्रतिषेधस्येतरविधिनान्तरीयकत्वात् अक्षणिकत्वे तु न क्रमसम्भवः समर्थस्य क्षेपायोगात्(२) असमर्थस्य कालान्तरेप्यजनकत्वस्वभावस्यानतिवृत्तेः क्रमवत्सहकारिलाभात् क्रमेण करणं तस्येति चेत् । अत्र वदन्ति । यदि सहकारिणो भावस्यातिशयं न जनयन्ति नापेक्षणीया अकिञ्चित्करत्वात् जनयन्ति चेत् स किं तावद्व्यतिरिक्तः अव्यतिरिक्तो वा व्यतिरेकपक्षे तावदतिशयादेवागन्तुकादन्वयव्यतिरेकाभ्यां कार्योत्पत्तिरि-

(१) न चेष्टत्वादिति योजना । (२) क्रमायोगात्-पा॰ १ पु॰ ।

त्यक्षणिकस्य न हेतुत्वं सत्यपि तस्मिन्नभावात्। सहकारिकृतातिशयसहितस्य तस्य जनकत्वमिति चेत् अतिशयस्यातिशयान्तरानारम्भे कीदृशी सहायता आरम्भे चानवस्थायाः का प्रतिक्रिया सहकारिजन्योतिशयः स चाक्षणिकस्येति(१) सुभाषितम्। अनुपकार्यानुपकारकयोः सम्बन्धाभावात् भावादभिन्नोऽतिशयः सहकारिभिः क्रियते इत्यपि न सुपेशलम्। भावस्य पूर्वोत्पन्नस्य पुनरुत्पत्त्यभावात्। प्राक्तनो हि भावोऽनतिशयात्मा निवर्तते अन्यश्चातिशयात्मा जायते इति चेत् क्षणिकत्वसिद्धिः। ननु क्षणिकस्यापि सहकारिभिः किं क्रियते न किञ्चित् किमर्थं तर्हि ते ना(२)पेक्ष्यन्ते को वै ब्रूते अपेक्ष्यन्ते इति प्रत्येकमेव हि कार्यजननाय समर्था अन्त्यावस्थाभाविनः क्षणाः का तेषां परस्परापेक्षा यत्तु तदानीं परस्परं प्रत्यासीदन्ति तदुपसर्पणकारणस्यावश्यम्भावनियमात् न तु सम्भूय कार्यकरणाय तत्काले चोपसर्पणहेतुनियमस्तेषां वस्तुस्वाभाव्यात् प्रत्येकं समर्था हेतवः प्रत्येकं काय जनयेयुः किमित्येकमनेके कुर्वन्ति अत्राप्यमीषां कारणानि प्रष्टव्यानि यान्यप्रत्येकार्थनिर्वर्तनशीलानि प्रभावयन्ति। वयं तु यथादृष्टस्य वस्तुस्वभावस्य वक्तारो न पर्यनुयोगमर्हामः। कार्यमेकेनैव कृतं किमपरे कुर्वन्तीति चेत् न कृतं कुर्वन्ति किन्त्वेकेन क्रियमाणमपरेपि कुर्वन्ति यद्येकमेव समर्थं तत्रापरेषां क उपयोग इति चेत् सत्यम् न ते प्रेक्षापूर्वकारिणो यदेवं विमृश्योदासते एकं कार्यमनेकस्मादुत्पद्यते इति दुर्घटमिदम् कारणभेदस्य कार्यभेदहेतुत्वादिति चेन्नैवं सामग्रीभेदाद्धि कार्यभेदो न सहकारिभेदात् एककार्यकारितैव सहकारिता तस्मात् क्षणिकत्वे क्रमवतां भावानां क्रमेण कार्यकरणं घटते दुर्घटा त्वक्षणिकस्य क्रमेणार्थक्रियेति युगपत्करणमपि दुर्घटं तावत्कार्यकरणसमर्थस्य स्वभावस्योत्तरकालमप्यनिवृत्तेः कृतस्य करणं नास्ति कर्तव्यं चास्य न विद्यते निखिलस्य कार्यकलापस्य सकृदेव कृतत्वात् अतः क्षणान्तरे न करोतीति चेत्तर्हि अयं तदानीमसन्नेव समस्तार्थक्रियाविरहात् तदेवं व्यापकयोः क्रमयौगपद्ययोरनुपलम्भेनाक्षणिकान्निवर्तमानं सत्त्वं क्षणिके व्यवतिष्ठते तथा च सति सुलभं क्षणिकत्वानुमानं यत् सत् तत् क्षणिकं सन्ति च(३) द्वादशायतना-

(१) क्षणिकस्येत्यपि-पा॰ २।४ पु॰। (२) ते चा-पा॰ २ पु॰।
(३) द्वादशायतनानि माधवीये सर्वदर्शनसंग्रहे प्रतिपादितानि।

नीति । अत्रोच्यते । न सत्त्वात् क्षणिकत्वसिद्धिः तस्य विपक्षव्यावृत्त्यनवगमात् । यत्क्रमयौगपद्यरहितं तदसत् यथा वाजिविषाणं क्रमयौगपद्यरहितं चाक्षणिकमिति बाधकेनाक्षणिकात् क्रमयौगपद्यव्यावृत्त्या सत्त्वव्यतिरेकप्रतीतिरिति चेन्न अक्षणिकस्याप्रतीतौ सत्त्वस्य ततो व्यावृत्तिप्रतीत्यसम्भवात् यथा प्रतीयमाने जले तत्र वह्निधूमयोरभावप्रतीतिः एवमक्षणिके दृश्यमाने क्रमयौगपद्याभावात् सत्त्वाभावः प्रत्येतव्यः न चाक्षणिको नाम कश्चिदस्ति भवतां यथाऽप्रतीयमानेपि पिशाचे ततोन्यव्यावृत्तिः प्रतीयते स्तम्भः पिशाचो न भवतीति तद्वदेतदपि भविष्यतीति चेन्न व्यावृत्तेरनुपलब्धिप्रमाणैकगोचरत्वात् तद्विविक्तेतरपदार्थोपलब्धिस्वभावत्वाच्चानुपलब्धेः प्रतियोग्युपलब्धिमन्तरेणाभावात् न च स्वरूपविप्रकृष्टत्वे पिशाचस्य ततो व्यावृत्तिप्रतीतिसम्भवः कथं तर्हि स्तम्भः पिशाचो न भवतीतिप्रतीतिरिति चेत् नायं संसर्गप्रतिषेधः किन्तु तादात्म्यप्रतिषेधोऽयम् स च स्तम्भात्मतया प्रसञ्जितस्य पिशाचस्य दृश्यत्वाभ्यनुज्ञानात् प्रवर्तते नान्यथा । यथोक्तम् । तादात्म्येन यावान्निषेधः स सर्वे उपलब्धिलक्षणप्राप्तत्वाभ्युपगमेन क्रियते इति । तत्र स्तम्भस्वरूपैकनियता स्तम्भप्रतीतिस्तदनात्मव्यवच्छेदकारणम् यदि स्तम्भः पिशाचो भवेत् तेनाप्यात्मना ज्ञातः स्यात् न च ज्ञानं स्तम्भत्ववत् पिशाचात्मतामपि गृह्णाति तस्मादयं पिशाचो न भवतीति । अथ मतं न नीलादिव्यतिरिक्तोऽक्षणिकः क्षणिको वा कश्चिदस्ति किन्तु प्राक्तनबुद्धिवेद्यो नीलादिक्षणोऽधुनातनबुद्धिवेद्यान्नीलक्षणादभेदेनारोप्यमाणोऽक्षणिक इत्युच्यते । भेदेन व्यवस्थाप्यमानश्च क्षणिक इति तत्र नीलादिष्वेव क्रमाक्रमव्यावृत्त्या सत्त्वाभावप्रतीतिः यदि पूर्वोपलब्धक्षण एवायमुपलभ्यते तदा सम्प्रतितनीमर्थक्रियां प्रागेव कुर्यात् प्राक्तनीं वा सम्प्रत्येव न पुनः क्रमेण कुर्यादेकस्य कारकत्वाकारकत्वविरोधात् । नापि सर्वं पूर्वमेव कुर्यात् सम्प्रत्यर्थक्रियारहितस्यासत्त्वप्रसङ्गादिति । तत्रापि किमेवं सत्त्वस्य हेतोर्वास्तवो विपक्षो दर्शितः कल्पनासमारोपितो वा समर्थितः न तावद्वास्तवो विपक्षो नीलादीनामक्षणिकत्वस्यावास्तवत्वात् तस्मादनुमानाद्वास्तवीमर्थगतिमिच्छता लिङ्गस्य त्रैरूप्यविनिश्चयार्थे धूमानुमानवत् सर्वत्र प्रमाणसिद्धः पक्षादिभावो दर्शयितव्यो न कल्पनामात्रेण न चाक्षणिकस्तथाभूतोस्तीति व्यतिरेकासिद्धिः तदसिद्धावन्वयस्याप्यसिद्धिस्त-

स्यात्तत्पूर्वकत्वादित्यसाधारणत्वं हेतोः। अपि च बाधकेनाक्षणिकात् सत्त्वव्यतिरेकः प्रसाधितः क्षणिकत्वसत्त्वयोरन्वयः कुतः सिद्ध्यति न च तत्र विपक्षव्यावृत्तिमात्रेण हेतुत्वमसाधारणस्यापि हेतुत्वप्रसङ्गात् केवलव्यतिरेक्यनुमानं च स्वयमनिष्टं अक्षणिके ऽपि सत्त्वं न भवतीत्यवस्थापिते ऽर्थात् क्षणिकाश्रयं सत्त्वमित्यन्वयसिद्धिरिति चेत् न तावदर्थादिति सत्त्वस्य हेतोः परामर्शः असिद्धान्वयस्य तस्याद्यापि हेतुत्वाभावात् बाधकमेव तूभयव्यापारं प्रमाणान्तरं वा व्याप्तिं प्रसाधयद् द्वादशायतनेष्वेव प्रसाधयेन्निर्विषयाया व्याप्तेः प्रत्येतुमशक्यत्वाद् द्वादशायतनव्यतिरिक्तस्य चार्थस्याभावात् तेषु चान्वयप्रतीतौ क्षणिकत्वस्यापि प्रतीतिः सम्बन्धिप्रतीतिनान्तरीयकत्वात् सम्बन्धप्रतीतेरिति सत्त्ववैयर्थ्यं पक्षे सामान्येन व्याप्तिग्रहणं विशेषे सत्त्वस्य हेतुत्वमिति चेन्न निर्विशेषस्य सामान्यस्य प्रतीत्यभावात् विशेषपरिनिष्ठयोश्च क्षणिकत्वसत्त्वसामान्ययोः प्रतीयमानयोर्नीलादिगतं क्षणिकत्वं प्रतीतमिति सूक्तं सत्त्ववैयर्थ्यमिति । बाधकादक्षणिकत्वव्यावृत्त्यसत्त्वव्यावृत्त्योर्व्याप्तिग्रहणम् सत्त्वात्तु वस्त्वात्मकक्षणिकत्वप्रतीतिरिति चेन्न व्यावर्त्य(१)भेदेन कल्पितभेदयोर्व्यावृत्त्योस्तादात्म्यभावात् तादात्म्यं चानुमानाङ्गमुक्तम् वस्त्वात्मनोः क्षणिकत्वसत्त्वयोस्तादात्म्यात् तदात्मकत्वेनाध्यवसितयोरपि व्यावृत्त्योस्तादात्म्यमिति चेन्न वस्तुनोस्तादात्म्यस्यान्यतो ऽप्रसिद्धेः प्रसिद्धौ वा बाधकस्यापि वैयर्थ्यम् न च व्यावृत्त्योः प्रतिबन्धनिश्चये वस्तुसिद्धिरस्ति वस्त्ववस्तुनोर्भेदादसम्बन्धाच्च। यदप्युक्तं धर्मोत्तरेण । घटे बाधकेन व्याप्तिं प्रसाध्य शब्दे सत्त्वात् क्षणिकत्वप्रसाधनमित्युभयोरपि सार्थकत्वं विषयभेदादिति । तत्रापीदमुत्तरम् । घट इव शब्देपि बाधकस्य प्रवृत्त्यविरोधात् प्रमाणान्तरानुसरणमफलमिति । न चाक्षणिकस्यार्थक्रियानुपपत्तिः सहकारिसाहित्ये हि सति कार्यकरणस्वभावो हि भावो नानपेक्षकारकस्वरूपः तस्य यथान्वयव्यतिरेकावगतसामर्थ्याः सहकारिणः सन्निपतन्ति तथा कार्योत्पत्तिरित्युपपद्यते स्थिरस्यापि क्रमेण करणम् अनेककारणाधीनस्य कार्यस्यैकस्मादुत्पत्त्यभावात् । न च सहकारिसापेक्षित्वे सति तत्कृतादेवातिशयात् कार्योत्पत्तेर्भावो न कारक इति युक्तम् । भावस्व-

(१) व्यावृत्त्य-पा० २ पु० । व्यावर्त्याभेदेन-पा० ४ पु० ।

रूपानुगमेन कार्योत्पाददर्शनात् अकारकत्वे हि यवबीजस्य क्षित्युदकसन्निधौ शालिबीजाद्यङ्कुरोपि स्यात् नियमकारणाभावात् नापि सहकारिणो भावस्य स्वरूपातिशयमादधति किन्तु सहकारिण एव ते । अतिशयः पुनरेतस्य सहकारिसाहित्यम् अनतिशयेपि तदभाव एव तस्मिन् सति ततः कार्यस्य भावादसत्यभावात् जनकाजनकक्षणभेदाभ्युपगमः सर्वदावस्थानग्राहिप्रत्यक्षबाधितः सुसदृशक्षणानामव्यवधानोत्पादेनान्तराग्रहणादवस्थानभ्रमोयमिति चेत् स्थिते क्षणिकत्वे प्रत्यक्षस्य भ्रान्तता तद्भ्रान्तत्वे च क्षणिकत्वसिद्धिरित्यन्योन्यापेक्षता । न च (१)यद्यस्योत्पत्तिकारणं विनाशकारणं चान्वयव्यतिरेकाभ्यामवगतं तयोरभावे तस्योत्पत्तिविनाशकल्पना युक्ता(२) निर्हेतुको विनाशो बीजमपि बीजस्य कारणमिति चासिद्धम् । अङ्कुरजनकं बीजं बीजकृतं न भवति बीजत्वाच्छालिस्तम्भमूर्धस्थितबीजवत् निर्भागं वस्तु तस्य कारकत्वमकारकत्वं चेत्यंशावनुपपन्नाविति यत्किञ्चिदेतत् । यथा वह्नेर्दाहं प्रति कारकत्वमकारकत्वं च स्नानं प्रति न च ताभ्यामस्य स्वरूपभेदः तथैकस्यैव भावस्य सहकारिभावात् कारकत्वमकारकत्वं च तदभावात् कथमन्यस्य सन्निधावन्यस्य कारकत्वं कारकत्वेपि कथं कस्यचिदेव न तु सर्वस्येति चेत् अत्र वस्तुस्वभावाः पर्यनुयोक्तव्याः । वयं तु यत्र येषामन्वयव्यतिरेकाभ्यां सामर्थ्यमवगच्छामः तत्र तेषामेव सामग्रीभावमभ्युपगच्छन्तो नोपालम्भमर्हामः । त्वत्पक्षेपि क्षित्युदकबीजानामेवाङ्कुरोत्पत्तौ सहकारिता नापरेषाम् तवापि वस्तुस्वभावादपरः को हेतुः प्रत्येकमेव बीजादयः समर्थाः न परस्परसहकारिण इति चेत् किमर्थं तर्हि कृषीवलः परिकर्मितायां(३) भूमौ बीजमावपति उदकं चासिञ्चति परस्पराधिपत्येन तेभ्यः प्रत्येकमङ्कुरजननयोग्यक्षणजननायेति चेत् यद्यङ्कुरजननयोग्यक्षणोपजननाय बीजं स्वहेतुभ्यः समर्थमुपजातं किमवनिसलिलाभ्याम् अथासमर्थं तथापि तयोरकिञ्चित्करः सन्निधिः स्वभावस्यापरित्यागात् क्षित्युदकाभ्यां बीजस्य स्वसन्तानवर्तिन्यसमर्थक्षणान्तरारम्भणशक्तिर्निरुद्ध्यते इति चेत् अस्तु तस्मादसमर्थक्षणानुत्पत्तिः समर्थक्षणोत्पत्तिस्तु दुर्लभा कारणाभावात् । न च

(१) तावदित्यधिकं ४ पु० । (२) न च युक्तेति सम्बन्धः । (३) परिकर्षितायां–पा० २ पु० ।

स्वभावभूतायाः शक्तेरस्ति निरोधो भावस्यापि निरोधप्रसङ्गात् सहेतुकश्च(१) विनाशः प्राप्नोति विशिष्टक्षणोत्पादनशक्त्याधानं च बीजस्याशक्यं क्षणिकत्वात् स्वभावाव्यतिरिक्तशक्त्युत्पादने चोत्पन्नोत्पादनप्रसङ्गात् तस्मादसमर्थस्योत्पादवतो न काचित् क्रिया समर्थस्योत्पादानन्तरमेव करणमिति द्वयी गतिः न त्वर्थान्तरसाहित्ये सति करणं तस्यानुपयोगात् । अथ मतम् एकस्मात् कार्यानुत्पत्तेर्बहुभ्यश्च तदुत्पत्तिदर्शनात् सहितानामेव सामर्थ्यमिति किमित्येवंवदद्भ्योऽस्मभ्यं भ्राम्यति भवान् तदेवमक्षणिकस्यार्थक्रियोपपत्तेरनैकान्तिको हेतुः । यदप्युक्तं कृतकानामवश्यम्भावी विनाशः तेनापि शक्यं क्षणिकत्वमनुमातुम्(२) तथाहि यद्येषां ध्रुवभावि तच्च तेषां कारणान्तरापेक्षा नास्ति यथा शरकृपाणादीनां लोहमयत्वे ध्रुवभावी(३) च कृतकानां विनाश इत्यनुमानं विनाशस्य हेत्वन्तरायत्ततां प्रतिक्षिपति ये हेत्वन्तरसापेक्षा न ते ध्रुवभाविनः यथा वाससि रागादयः । तथा यदि भावा अपि स्वहेतुभ्यो विनाशं प्रति हेत्वन्तरमपेक्षन्ते तदा हेत्वन्तरस्य प्रतिबन्धवैकल्ययोरपि सम्भवे कश्चित्कृतकोपि न विनश्येत् स्वहेतुतश्च विनश्वरस्वभावा जायमाना उत्पत्त्यनन्तरमेव विनश्यन्तीति सिद्धं क्षणिकत्वम् । अपि च भावस्याविनश्वरस्वभावत्वे विनाशोऽशक्यकरणो वह्नेरिव शीतिमा विनश्वरस्वभावत्वे वा नार्थो(४) हेतुभिः न च भावादभिन्नस्य विनाशस्य हेत्वन्तरजन्यता कारणभेदस्य भेदहेतुत्वात् । भिन्नस्य हेत्वन्तरादुत्पादे च भावस्योपलब्ध्यादिप्रसङ्गः अन्योत्पादादन्यस्वरूपप्रच्युतेरभावात् घटो नष्ट इति च भावकर्तृको व्यपदेशो न स्यात् किन्त्वभावो जात इति व्यपदिश्येत तथा च सति घटः किमभूदिति वार्ताप्रश्ने तस्य निवृत्तौ प्रस्तुतायामप्रस्तुतमेव कथं स्यात् तस्माद्भावस्वभाव एव विनाश इति । अत्रोच्यते । उत्पन्नो भावः किमेकक्षणावस्थायी किं वा क्षणान्तरेप्यवतिष्ठते क्षणान्तरावस्थितिपक्षे तावत्क्षणिकत्वव्याहतिरनेककालावस्थानात् एकक्षणावस्थायित्वे(५) तु क्षणान्तरे स्थित्यभाव इति न भावाभावयोरेकत्वं कालभेदात् । अथ मतं न ब्रूमो

(१) सहेतुश्च–पा॰ १ पु॰ । (२) क्षणिकत्वानुमानम्–पा॰ १ पु॰ ।
(३) ध्रुवभावे च–पा॰ २ पु॰ । (४) स्वभावत्वेन नार्थो–पा॰ २ । ४ पु॰ ।
(५) एकक्षणस्थायित्वे–पा॰ २ । ४ पु॰ ।

भावः स्वस्यैवाभावः किन्तु द्वितीयक्षणः पूर्वक्षणस्याभाव इति । तदप्यसारम् । पूर्वापरक्षणयोर्व्यक्तिभेदेपि स्वरूपविरोधस्याभावात् यथा घटो भिन्नसन्ततिवर्तिना घटान्तरेण सह तिष्ठति एवमेकसन्ततिवर्तिनापि सह तिष्ठेत् द्वितीयक्षणग्राहिप्रमाणान्तरस्य तत्स्वरूपविधेश्चरितार्थस्य प्रथमक्षणनिषेधे प्रमाणत्वाभावात् । अभावस्तु भावप्रतिषेधात्मैव घटो नास्तीतिप्रतीत्युदयात् ततस्तस्योत्पत्तिर्भावस्य निवृत्तिः तस्यावस्थानं भावस्यानवस्थितिः तस्योपलम्भो भावस्यानुपलम्भ इति युक्तम् परस्परविरोधात् । एवं च सति न भावस्य क्षणिकत्वं पश्चाद्भाविनस्तदभावस्य हेत्वन्तरसापेक्षस्य भावानन्तर्यनियमाभावात् । तथा च दृश्यते घटस्योत्पन्नस्य चिरेणैव विनाशो मुद्गराभिघातात् भावात्मको घटविनाशो मुद्गराभिघातात् तु कपालसन्तानोत्पादः स्यादित्यसङ्गतम् । सन्तानप्रतिबद्धायाः सदृशारम्भणशक्तेरप्रतिघाते विलक्षणसन्तानोत्पत्त्यसम्भवात् मुद्गराभिघातेन तस्याः प्रतिहतौ च भावप्रतिघाते कः प्रद्वेषः न च कारणकार्यत्वे भाववदभावस्यापि वस्तुत्वप्रसक्तिस्तस्य वस्तुप्रतिषेधस्वभावस्य प्रत्यक्षादिसिद्धत्वात् । ईदृशं चास्य स्वरूपं यदयं कृतकोपि भाववन्न विनश्यति नष्टस्यानुपलम्भात् प्रमाणाधिगतस्य वस्तुस्वभावस्य परसाधर्म्येण निराकरणत्वे जगद्वैचित्र्यस्यापि निराकरणम् अन्योत्पादे कथमन्यस्य स्वरूपप्रच्युतिरित्यपर्यनुयोज्यम् वस्तुस्वाभाव्याद् घटो विनिष्ट(१) इति च व्यपदेशः तदवयवक्रियादिन्यायेनाभावोत्पत्त्यैव । अत एवायं तस्यैवाभावो न सर्वस्य न चास्य समवायिकारणं किञ्चित् तदभावान्नासमवायिकारणम् क्व कार्यमनाधारं दृष्टम् इदमेव दृश्यते तावत् न ह्ययं घटे समवैति तस्याभावात् नापि भूतले ऽन्यधर्मत्वात् कथं तर्हि नियतदेशः प्रतीयते प्रतियोगिनियमात् अयमस्य स्वभावो यत्संयुक्तप्रतिषेधे संयुक्तवत्प्रतिभाति समवेतप्रतिषेधे समवेतवत् प्रतिभाति विशेषणमपीत्यमेव न पुनरस्य संयोगसमवायौ तयोर्भावधर्मत्वात् । तदेवं सिद्धोऽभावो भावविरोधी नास्ति बुद्धिवेद्यार्थः यत्कृतो दहनतुहिनयोरपि विरोधः दहनाभावस्तुहिने तुहिनाभावश्च दहने इत्यनयोर्विरोधो न स्वरूपेण विधेर्विध्यन्तरविरोधाभावात् । यच्च ध्रुवभा-

(१) नष्ट-पा॰ २ पु॰ ।

वित्वादभावस्य हेत्वन्तरानपेक्षेत्युक्तम् तदपि सवितुरुदयास्तमयाभ्यामनैकान्तिकं तयोरनपेक्षत्वे हि कालभेदो न स्यात् । एकसामग्रीप्रतिबन्धेपि स एव दोषः । नियतो हि वाससि रागहेतुर्नियतकालश्च तस्य तत्कालासन्निधिमात्रेण रागस्यानुत्पादः सिद्ध्यति अनन्तास्तु विनाशहेतवो नियतकालाश्च तेषां सर्वदा सर्वेषां प्रतिबन्धस्याशक्यत्वात् कश्चिदेको निपतत्येव । कालान्तरे च निपतितः क्षणेनैव भावं विनाशयतीत्युपपद्यते कृतकत्वेपि ध्रुवो विनाशः सर्वं चैतत्क्षणभङ्गसाधनं कालात्ययापदिष्टम् प्रत्यभिज्ञाप्रत्यक्षेण प्रतीतस्य पुनः प्रतीतेः । नन्वेष प्रत्ययो न भावस्य पूर्वापरकालावस्थानं शक्नोति प्रतिपादयितुं न ह्येतदेकं विज्ञानं कारणाभावात् इन्द्रियं सन्निहितविषयं न पूर्वकालत्वमवगाहते संस्कारोपि पूर्वानुभवजन्मा तद्विषये नियतो नापरकालतां परिस्पृशति न च ताभ्यामन्यदुभयविषयं किञ्चिदेकमस्ति यदेतद्विज्ञानं प्रसुवीत । इतोपि नैतदेकं विज्ञानं स्वभावभेदात् इदमिति हि प्रत्यक्षता तदिति हि परोक्षत्वं प्रत्यक्षतापरोक्षत्वे च परस्परविरोधिनी नैके युज्येते तस्माद्ग्रहणस्मरणात्मके द्वे इमे संवित्ती भिन्नविषये । अत्र ब्रूमः प्रतीयते तावदेतस्माद्विज्ञानात् पूर्वापरकालावच्छिन्नमेकं वस्तुतत्त्वम् तदप्यस्य विषयो न भवतीति संविद्विरुद्धम् । ग्रहणस्मरणे च नैकं विषयमालम्बेते तस्मादेकमेवेदं विज्ञानमितिप्रतीतिसामर्थ्यादुभयविषयमास्थेयम् प्रतीयमानकार्योत्पत्तये चाप्रतीयमानमपि कारणं कल्पयन्ति विद्वांसो न तु कारणाप्रतीत्या विषदमपि कार्यमपह्नुवते जगद्वैचित्र्यस्याप्यपह्नवप्रसङ्गात् । तेन यद्यपि प्रत्येकमिन्द्रियसंस्कारावसमर्थौ तथापि संहताभ्यामिदमेकं कार्यं प्रत्यभिज्ञास्वभावं प्रभावयिष्यते भविष्यति चैतदुभयकारणसामर्थ्यादुभयविषयम् प्राप्स्यति च प्रत्यक्षतां विषयेन्द्रियसामर्थ्यानुविधानात् । न च यत्रैकैकमसमर्थं तत्र मिलितानामपि तेषामसामर्थ्यं प्रत्येकमकुर्वतामपि क्षित्युदकबीजानामन्योन्यसन्निधिभाजामङ्कुरादिजननोपलब्धेः । यत्र विलक्षणा सामग्री तत्र कार्यमपि विलक्षणमेव स्यादिति सुप्रतीतम् तेनास्य सन्निहितासन्निहितविषयतालक्षणे प्रत्यक्षतापरोक्षते न विरोत्स्येते । अत एव चेन्द्रियसन्निकर्षाभावेपि पूर्वकालप्रत्यक्षतेव इन्द्रियजज्ञानविषयत्वात् तन्मात्रानुबन्धित्वाच्च प्रत्यक्षतायाः अस-

न्निहितमपि परिच्छिन्ददिन्द्रियं पूर्वकालतामेव परिच्छिनत्ति न भविष्यत्कालतां तत्र संस्कारस्य सहकारिणोऽभावात् । न चैकस्योभयकालतायां कदाचिदनुपपत्तिः येनास्योभयकालतां संकलयतः कल्पनात्वम् । दृष्टो ह्येकस्यानेकेन विशेषणेन([1]) सम्बन्धो यथा चैत्रस्य छत्रपुस्तकाभ्याम् युगपच्छत्रपुस्तकसम्बन्धे क्रमेण कालद्वयसम्बन्धे च न कश्चिद्विशेष एकस्योभयविशेषणावच्छेदप्रतीतिरुभयत्राविशेषात् । तदेवं देशकालावस्थाभेदानुगतमेकं वस्तुतत्त्वमध्यवसन्ती प्रत्यभिज्ञा भावानां प्रतिक्षणमुत्पादविनाशौ तिरयतीति । भ्रान्तेयं प्रतीतिरिति चेन्न बाधकाभावात् । क्षणभङ्गसाधनमेतस्या बाधकमिति चेत् प्रत्यक्षबाधे सत्यबाधितविषयत्वादनुमानोदयः उदिते च तस्मिन् प्रत्यक्षबाधेत्यन्योन्याश्रयत्वम् । प्रत्यक्षे तु नायं विधिस्तस्यानपेक्षत्वात् ज्वालादिषु सामान्यविषयं प्रत्यक्षं विशेषविषयं चानुमानमित्यविरोधान्न प्रत्यक्षेणानुमानोत्पत्तिनिषेध इत्यलम् । योप्यतिप्रौढिम्ना प्रत्यक्षसिद्धं क्षणभङ्गमाह तस्यानुभवाभाव एवोत्तरम् । नीलमेतदिति प्रतिपत्तिर्न क्षणिकमेतदिति नीलत्वाव्यतिरेकिणी क्षणिकता तस्याः पृथगर्थक्रियाया अभावात् अतो नीलत्वे गृह्यमाणे क्षणिकत्वमपि गृह्यते सुसदृशक्षणभेदाग्रहणात् तथा नाध्यवसीयते इति चेत् अहोपरः प्रज्ञाप्रकर्षो यदयमनुभवमपि व्याख्याय कथयति यन्ना([2])ध्यवसितं तद्गृहीतमिति मृगतृष्णिकेयम् प्रत्यक्षबलोत्पन्नादध्यवसायादन्यस्य प्रत्यक्षदृष्टत्वव्यवस्थानिबन्धनस्यानभ्युपगमात् । यस्मिन्नध्यवसीयमाने यन्नियमेन नाध्यवसीयते नीलपीतयोरिव तयोस्तादात्म्याभिधानमपि प्रलापः । क्षणिकं प्रत्यक्षं ज्ञानं स्वसमानकालवर्तिनीमर्थस्य सत्तां परिच्छिन्दत् तत्कालासम्बद्धतां व्यवच्छिन्दत् तत्कालभावाव्यभिचारिणः([3]) कालान्तरसम्बन्धमपि([4]) व्यवच्छिन्दत् तदेकक्षणावस्थायित्वं क्षणिकत्वं गृह्णातीति चेत् काशकुशावलम्बनमिदम् । स्वात्मानमेव न गृह्णाति विज्ञानं कुतः स्वसमानकालतामर्थस्य गृह्णाति गृह्णातु वा तथापि पूर्वमयं नासीत् पश्चाच्च न भविष्यतीत्यत्र प्रत्यक्षमजागरूकं पूर्वापरकालताग्रहणात् । वर्तमानकालपरिच्छेदे चातत्कालव्यवच्छेदो युक्तो भावाभावयोर्विरोधान्न तु कालान्तरसम्बन्धव्यवच्छेदो मणिसूत्रवदेकस्यानेकसम्ब-

---

(१) विशेषेण–पा॰ १ पु॰ । (२) यत्राध्यवसितं–इति केनचिच्छोधितं ४ पु॰ ।
(३) व्यभिचारः–पा॰ २ पु॰ । (४) सम्बद्धमपि–पा॰ २ पु॰ ।

न्यत्वाविरोधात् । प्रपञ्चितश्चायमर्थोऽस्माभिस्तत्त्वप्रबोधे तत्त्वसंवादिन्यां चेति नात्र प्रतन्यते । किञ्च सर्वभावक्षणिकत्वाभ्युपगमे कस्य संसारः ज्ञानसन्तानस्येति चेन्न सन्तानिव्यतिरिक्तस्य सन्तानस्याभावात् । अथ मतं नैकस्यानेकशरीरादियोगः संसारः किं तर्हि ज्ञानसन्तानाविच्छेदः स च क्षणिकत्वेपि नानुपपन्नः । तदप्यसारम् (१) । गर्भादिज्ञानस्य प्राग्भवीयज्ञानकृतत्वे प्रमाणाभावात् नहि समानजातीयादेवार्थस्योत्पत्तिर्विजातीयादप्यग्नेर्धूमस्योत्पत्तिसम्भवात् । अथ मतं यस्यान्वयव्यतिरेकावतिशयं च यदनुविधत्ते तत्तस्य समानजातीयमुपादानं चेति स्थितिः ज्ञानं च बोधात्मकत्वमतिशयं बिभर्ति तच्च पृथिव्यादिभूतेषु नास्ति तस्माद्यस्यायमतिशयस्तदस्य समानजातीयमुपादानकारणमिति स्थिते गर्भज्ञानं ज्ञानान्तरपूर्वकं सिद्ध्यति कारणव्यभिचारे कार्यस्याकस्मिकत्वप्रसङ्गादिति । तदप्यसारम् । अदहनस्वभावेभ्यो दारुनिर्मथनादिभ्यो वह्नेर्दाहातिशयोत्पत्तिवदबोधात्मकेभ्योपि चक्षुरादिभ्यो बोधात्मकत्वातिशयोत्पत्तिसम्भवे बोधात्मककारणकल्पनानवकाशात् अतो न प्राक्तनजन्मसिद्धिर्भविष्यति । जन्मान्तरमित्यपि न सिद्ध्यति मरणे शरीरान्त्यज्ञानेन ज्ञानान्तरं प्रतिसन्धातव्य(२)मित्यत्र प्रमाणाभावात् यद्यत्राविकलकारणावस्थं तज्जनयत्येव यथा अविकलजननावस्थं बीजमङ्कुरं प्रति अविकलजननावस्थं चान्त्यज्ञानमिति प्रमाणमस्तीति चेत् न ज्वालादीनामन्त्यक्षणेन व्यभिचारात् । स्नेहवर्तिक्षयादीनामन्त्यज्वालाक्षणस्य कारणावस्थावैकल्यादविकलत्वं नास्तीति चेत् अन्त्यज्ञानस्यापि मरणपीडया पीडितस्याविकलकारणावस्थत्वमसिद्धमिति सुव्याहृतं क्षणिकत्वे परलोकाभाव इत्युपरम्यते ॥

आत्मसिद्धौ प्रमाणान्तरमप्याह । शरीरसमवायिनीभ्यामिति । प्रवृत्तिनिवृत्तिभ्यां प्रयत्नवान् विग्रहस्य शरीरस्याधिष्ठातानुमीयते । लतादि प्रवृत्तिव्यवच्छेदार्थं शरीरसमवायिनीभ्यामित्युक्तम् । स्रोतःपतितमृतशरीरप्रवृत्तिनिवृत्तिव्यवच्छेदार्थं च हिताहितप्राप्तिपरिहारयोग्याभ्यामिति । हितं सुखमहितं दुःखं तयोः प्राप्तिपरिहारौ हितस्य प्राप्तिरहितस्य परिहारः तत्र

(१) तदप्यसारम्–पा॰ १ पु॰ । (२) सन्धातव्य–पा॰ ४ पु॰ ।

योग्याभ्यां समर्थाभ्यामिति बुद्धिपूर्वकचेष्टापरिग्रहः । रथकर्मणा सारथिवदिति दृष्टान्तकथनम् । साधनोपादानपरिवर्जनद्वारेण हिताहितप्राप्तिपरिहारसमर्था चेष्टा प्रयत्नपूर्विका विशिष्टक्रियात्वात् रथक्रियावत् । शरीरं वा प्रयत्नवदधिष्ठितं विशिष्टक्रियात्वा(१)द्रथवत् । प्राणादिभिश्चेति । प्राणादिभिश्च प्रयत्नवानधिष्ठातानुमीयते इत्यनुषञ्जनीयम् । प्राणादिभिरित्यनेन प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानीति सूत्रोक्तसमस्तलिङ्गपरिग्रहः । कथमिति प्रश्नपूर्वकं प्राणापानयोलिङ्गत्वं दर्शयति । शरीरपरिगृहीत इति । वायुस्तिर्यग्गमनस्वभावः शरीरपरिगृहीते वायौ प्राणापानाख्ये विकृतं स्वभावविपरीतं कर्मोर्ध्वगमनमधोगमनं च दृश्यते । तस्मात् प्रयत्नवान् विग्रहस्याधिष्ठातानुमीयते यस्तथा वायुं प्रेरयति अन्यथास्य विकृतवाय्वसम्भवात् । भस्त्राध्मापयितेव दृष्टान्तः । शरीरं प्रयत्नवदधिष्ठितमिच्छापूर्वकविकृतवाय्वाश्रयत्वात् भस्त्रावत् शरीरपरिगृहीत इत्यनेनेच्छापूर्वकत्वं दर्शितम् । तेन हि द्विवायुकादिभिर्नानैकान्तिकम् । निमेषोन्मेषकर्मणा नियतेन दारुयन्त्रप्रयोक्तेवेति । अक्षिपक्ष्मणोः संयोगनिमित्तं कर्म निमेषः विभागार्थं कर्मोन्मेषः तेन कर्मणा दारुयन्त्रप्रयोक्तेव विग्रहस्य प्रयत्नवानधिष्ठातानुमीयते । वायुवशेनापि दारुयन्त्रस्य निमेषोन्मेषौ स्यातां तन्निवृत्त्यर्थं नियतेनेति । अनेनेच्छाधीनत्वं कथयति । शरीरं प्रयत्नवदधिष्ठितमिच्छाधीननिमेषोन्मेषवदवयवयोगित्वाद् दारुयन्त्रवत् । जीवनलिङ्गकमनुमानं कथयति । देहस्येति । वृद्धिः प्रसिद्धैव । क्षतस्य भग्नस्य च संरोहणं पुनः सङ्घटनं तयोर्निमित्तत्वाद्गृहपतिरिव प्रयत्नवानधिष्ठातानुमीयते । शरीरस्य वृद्धिक्षतसंरोहणं प्रयत्नवता कृतं वृद्धिक्षतभग्नसंरोहणत्वात् गृहवृद्धिक्षतभग्नसंरोहणवत् । वृक्षादिगतेन वृद्ध्यादिना व्यभिचार इति चेन्न तस्यापीश्वरकृतत्वात् । न तु वृक्षादयः सात्मका बुद्ध्या(२)द्युत्पादनसमर्थस्य विशिष्टात्मसम्बन्धस्याभावात्(३) । मनोगतिलिङ्गकमनुमानमुपन्यस्यति । अभिमतेत्यादिना । अभिमतो विषयो जिघृक्षितोर्थः तस्य यद्ग्राहकं करणं चक्षुरादि तेन योगो मनःसम्बन्धस्तस्य निमित्तेन मनःकर्मणा । गृहे कोणेषु कोष्ठेषु भूमौ रोपितं पेलकं प्रति ह-

---

(१) क्रियत्वादिति-साधुः । (२) वृद्ध्या इति साधुः ।
(३) किरणावल्यादिविरुद्धत्वाच्चिन्त्यम् ।

स्तस्थितस्य पेलकस्य(१) प्रेरको दारक इव प्रयत्नवान्मनःप्रेरकोऽनुमीयते। प्रयत्नवता प्रेर्यं मनः अभिमतविषयसम्बन्धनिमित्तक्रियाश्रयत्वाद्दारकहस्तगतपेलकवत् वाय्वादिप्रेरितस्यानभिमतेनापि सम्बन्धो भवति(२)। नयनविषयेति। नयनविषयस्य रूपस्यालोचनाद्ग्रहणानन्तरं रसस्यानुस्मरणक्रमेण रसनेन्द्रियान्तरविकारो दृश्यते तस्मादुभयोर्गवाक्षयोरन्तःप्रेक्षक इव द्वाभ्यामिन्द्रियाभ्यां रूपरसयोर्द्रष्टा कश्चिदेकोनुमीयते। किमुक्तं स्यात् कस्यचिदिष्टफलस्य रूपं दृष्ट्वा तत्सहचरितस्य पूर्वानुभूतस्य रसस्य स्मरणात् तदिच्छा भवति ततोपि प्रयत्नः आत्ममनःसंयोगापेक्षो रसनेन्द्रियविक्रियां करोति सादन्तोदकसंप्लवानुमिता रसनेन्द्रियविक्रिया इन्द्रियचैतन्ये न स्यात् प्रत्येकं नियताभ्यां चक्षूरसनाभ्यां रूपरसयोः साहचर्यप्रतीतौ रूपदर्शनेन रसस्मृत्यभावात् अस्ति चायं विकारः तस्मादिन्द्रियव्यतिरिक्तः कोप्युभयदर्शी यो रूपं दृष्ट्वा रसस्य स्मरति। शरीरमेवोभयदर्शि भविष्यतीति चेन्न बालवृद्धशरीरयोः परिमाणभेदेनान्यत्वे सिद्धे बाल्यावस्थानुभूतस्य वृद्धावस्थायामस्मरणप्रसङ्गात्। न केवलं पूर्वोक्तैर्हेतुभिः सुखदुःखेच्छाद्वेषादिभिश्च गुणैर्गुण्यनुमीयते। अहङ्कारेणाहमितिप्रत्ययेनैकवाक्यत्वमेकाधिकरणत्वं सुखादीनामहं सुखी अहं दुःखीत्यहङ्कारप्रत्ययविषयस्य सुखाद्यवच्छेद्यस्य प्रतीतेः। अहंप्रत्ययश्च न शरीरालम्बनः परशरीरेऽभावात्। स्वशरीरे एवायं भवतीति चेन्न अविशेषात्। शरीरालम्बनोऽहंप्रत्ययः स्वशरीरवत् परशरीरमपि चेत् प्रत्यक्षं तत्र यथा स्थूलादिप्रत्ययः स्वशरीरे परशरीरेपि भवति। एवमहमितिप्रत्ययोपि स्यात् स्वरूपस्योभयत्राविशेषात् स्वसम्बन्धिताकृते तु विशेषे तत्कृत एवायं प्रत्ययो न शरीरालम्बनः तदालम्बनत्वे चान्तर्मुखतयापि न भवेत् अत एवायं नेन्द्रियालम्बनः इन्द्रियाणामतीन्द्रियत्वात् अस्य च लिङ्गशब्दानपेक्षस्य प्रत्यक्षप्रत्ययत्वात् तस्मात् सुखादयोपि न शरीरेन्द्रियविषयाः। किञ्च योनुभविता तस्यैव स्मरणमभिलाषः सुखसाधनपरिग्रहः सुखोत्पत्तिः दुःखप्रद्वेष इति सर्वशरीरिणां(३) प्रत्यात्मसंवेदनीयम् अनुभवस्मरणे च न शरीरेन्द्रियाणामित्युक्तम् ततोपि सुखादयो न तद्विषयाः। युक्त्यन्तरं चाह। प्रदेशवृत्तित्वादिति।

(१) पेलको जतुगुलकः। (२) न तेन व्यभिचारः। (३) सर्वशरीरं-पा० २ पु०।

दृश्यते प्रदेशवृत्तित्वं सुखादीनां पादे मे सुखं शिरसि मे दुःखमितिप्रत्ययात् । ततश्च शरीरेन्द्रियगुणत्वाभावस्तद्विशेषगुणानां व्याप्यवृत्तिव्यभिचारात् सुखादयः शरीरेन्द्रियविशेषगुणा न भवन्ति अव्याप्यवृत्तित्वात् । ये तु शरीरेन्द्रियविशेषगुणास्ते व्याप्यवृत्तयो दृष्टाः यथा रूपादयः न च तथा सुखादयो व्याप्यवृत्तयः तस्मान्न शरीरेन्द्रियगुणा इति व्यतिरेकी । कर्णशष्कुल्यवच्छिन्नस्य नभोदेशस्य(१) श्रोत्रेन्द्रियभावमापन्नस्य यः शब्दो गुणो भवति स तद्विवरव्यापीत्यव्यभिचारः । इतोपि (२) न शरीरेन्द्रियगुणाः सुखादयो भवन्ति अयावद्द्रव्यभावित्वात् व्यतिरेकेण रूपादय एव निदर्शनम् इन्द्रियगुणप्रतिषेधे तु नायं हेतुः श्रोत्रगुणेन शब्देनानैकान्तिकत्वात् । इतोपि न शरीरेन्द्रियगुणाः सुखादयो बाह्येन्द्रियाप्रत्यक्षत्वात् शरीरेन्द्रियगुणानां द्वयी गतिः अप्रत्यक्षता गुरुत्वादीनां बाह्येन्द्रियप्रत्यक्षता रूपादीनां विधान्तरं तु सुखादयस्तस्मान्न तद्गुणा इति शरीरेन्द्रियगुणत्वे प्रतिषिद्धे परिशेषात् तैरात्मानुमीयते इति स्थितिः । ननु सुखं दुःखं चेमौ विकाराविति नित्यस्यात्मनो न सम्भवतः भवतश्चेत् सोपि चर्मवदनित्यः स्यान्न तयोरुत्पादविनाशाभ्यां तदन्यस्यात्मनः(३) स्वरूपप्रच्युतेरभावात् नित्यस्य हि स्वरूपविनाशः स्वरूपान्तरोत्पादश्च विकारो नेष्यते गुणनिवृत्तिर्गुणान्तरोत्पादश्चाविरुद्ध एव । अथास्य नित्यस्य सुखदुःखाभ्यां किं क्रियते । स्वविषयोऽनुभवः । सुखदुःखानुभवे सत्यस्यातिशयानतिशयरहितस्य क उपकारः । अयमेव तस्योपकारोऽयमेव चातिशयो यस्मिन् सति सुखदुःखभोक्तृत्वात् । तथाहंशब्देनापीति । यथा सुखादिभिरात्मानुमीयते तथाहंशब्दे(४)नाप्यनुमीयते अहंशब्दो लोके वेदे चाभियुक्तैः प्रयुज्यमानो न तावन्निरभिधेयः न च स्वरूपमभिधेयं युक्तं स्वात्मनि क्रियाविरोधात् । यथोक्तम् । नात्मानमभिधत्ते हि कश्चिच्छब्दः कदाचन(५) । तस्माद्योस्याभिधेयः स आत्मेति । नन्वयं पृथिव्यादीनामेव वाचको भविष्यति तत्राह । पृथिव्यादिशब्दव्यतिरेकादिति । यो यस्यार्थस्य वाचकः स तच्छब्देन समा-

(१) नभःप्रदेशस्य-पा· २ पु· ।
(२) यतोऽपि- पा· २ पु· ।
(३) मन्यस्यात्मनः-पा· १ पु· ।
(४) अहंत्वेनापि-पा· १ पु· ।
(५) कथञ्चन-पा· १ पु· ।

नाधिकरणो दृष्टः यथा द्रव्यं पृथिवीति । अहंशब्दस्य तु पृथिव्यादिवाचकैः शब्दैः सहव्यतिरेकः समानाधिकरणत्वाभावः अहं पृथिवी अहमुदकमिति प्रयोगाभावात् तस्मान्नायं पृथिव्यादिविषयः । ननु शरीरविषय एवायं दृश्यते स्थूलोहमिति । न । अहं जानाम्यहं स्मरामीति प्रयोगात् । शरीरस्य च ज्ञानस्मृत्यधिकरणत्वं निषिद्धं तस्मादात्मोपकारकत्वेन लक्षणया शरीरे तस्य प्रयोगः यथा भृत्ये ऽहमेवायमिति व्यपदेशः । एवं व्यवस्थिते सत्यात्मनो गुणान् कथयति । तस्य च गुणा इत्यादिना । बुद्ध्यादीनामात्मनि सद्भावे सूत्रकारानुमतिं दर्शयति । आत्मलिङ्गाधिकारे बुद्ध्यादयः प्रयत्नान्ताः सिद्धा इति । आत्मलिङ्गाधिकार इति प्राणापानादिसूत्रं लक्षयति । धर्माधर्मावात्मान्तरगुणानामकारणत्ववचनादिति । धर्माधर्मावात्मान्तरगुणानामकारणत्वादिति वचनात् सिद्धौ । दातरि वर्तमानो दानधर्मः प्रतिग्रहीतरि([1]) धर्मं जनयतीति कस्यचिन्मतं निषेद्धुं सूत्रकृतोक्तं आत्मान्तरगुणानामात्मान्तरगुणेष्वकारणत्वादिति । अस्यायमर्थः । आत्मान्तरगुणानां सुखादीनामात्मान्तरगुणेषु सुखादिषु कारणत्वाभावाद्धर्माधर्मयोरन्यत्र वर्तमानयोरन्यत्रारम्भकत्वमयुक्तमिति । एतेन धर्माधर्मयोरात्मगुणत्वं कथितम् अन्यथा तयोः सुखादिसाधर्म्यकथनेनारम्भकत्वसमर्थनं न स्यात् । संस्कारः स्मृत्युत्पत्ताविति । आत्ममनसोः संयोगात् संस्काराच्च स्मृतिसूत्रं लक्षयति । पूर्वानुभूतोर्थः स्मर्यते न तत्रानुभवः कारणं चिरविनष्टत्वात् नाप्यनुभवाभावः कारणम् अभावस्य निरतिशयत्वेन पटुमन्दादिभेदानुपपत्तेरभ्यासवैयर्थ्याच्च तस्मादनुभवेनात्मनि कश्चिदतिशयः कृतो यतः स्मरणं स्यादिति संस्कारकल्पना । ये तु विनष्टमप्यनुभवमेव([2]) स्मृतेः कारणमाहुः तेषां विनष्टमेव ज्योतिष्टोमादिकं स्वर्गादिफलस्य साधनं भविष्यतीति अदृष्टस्याप्युच्छेदः स्यात् । व्यवस्थावचनात् संख्येति । नानात्मानो व्यवस्थात इति सूत्रेणात्मनानात्वप्रतिपादनाद्बहुत्वसंख्या सिद्धेत्यर्थः । अथ केयं व्यवस्था नानाभेदभाविनां ज्ञानसुखादीनामप्रतिसन्धानम् ऐकात्म्ये हि यथा बाल्यावस्थायामनुभूतं वृद्धावस्थायामनुसन्धीयते मम सुखमासीन्मम दुःखमासीदिति ।

---

(१) प्रतिग्रहीतरि-पा॰ २ पु॰ । (२) विग्निष्टमेवानुभवमेव-पा॰ २ पु॰ ।

गादङ्गुलिकर्म तस्माज्ज्याङ्गुलिविभागः(१) ततो विभागात् संयोगविनाशः तस्मिन् विनष्टे प्रतिबन्धकाभावाद्यदा धनुषि वर्तमानः स्थितिस्थापकः संस्कारो मण्डलीभूतं धनुर्यथावस्थितं स्थापयति तदा तमेव संस्कारमपेक्षमाणाद्धनुर्ज्यासंयोगाज्ज्यायां शरे च कर्मोत्पद्यते तत्स्वकारणापेक्षं ज्यायां संस्कारं करोति तमपेक्षमाण इषुज्यासंयोगो नोदनं तस्मादिषावाद्यं कर्म नोदनापेक्षमिषौ संस्कारमारभते । तस्मात् संस्काराद्नोदनसहायात् तावत् कर्माणि भवन्ति यावदिषुज्याविभागो विभागान्निवृत्ते नोदने कर्माण्युत्तरोत्तराणीषुसंस्कारादेवापतनादिति । बहूनि कर्माणि क्रमशः कस्मात् संयोगबहुत्वात् एकस्तु संस्कारोऽन्तराले कर्मणोऽपेक्षाकारणाभावादिति ॥

कृतव्यायामः कृतायुधाभ्यासो वामेन करेण धनुर्विष्टभ्य गाढं गृहीत्वा दक्षिणेन शरं सन्धाय ज्यायां शरं संयोज्य सशरां ज्यां शरेण सह वर्तमानां ज्यां मुष्टिना गृहीत्वा इच्छां करोति सज्येष्वाकर्षयाम्येतद्धनुरिति । ज्येति धनुर्गुणस्याख्या इषुरिति शरस्याभिधानम् ज्या च इषुश्च ज्येषू सह ज्येषुभ्यां वर्तते इति सज्येषुधनुरेतदाकर्षयामीतीच्छाया आकारो दर्शितः । तदनन्तरं प्रयत्नस्तमपेक्षमाणादात्महस्तसंयोगादाकर्षणकर्म हस्ते यदैवोत्पद्यते तदैव तं प्रयत्नमपेक्षमाणाद्धस्तज्याशरसंयोगाज्ज्यायां शरे च कर्म हस्तशरसंयोगात् प्रयत्नविशिष्टज्याहस्तसंयोगमपेक्षमाणाभ्यां ज्याकोटिसंयोगाभ्यां कर्मणी धनुष्कोट्योरिति । एतत्सर्वं युगपत्कारणयौगपद्यात् । एवमाकर्णादाकृष्टे धनुषि नातः परमनेन हस्तेन गन्तव्यमिति यज्ज्ञानं तस्मात् तदाकर्षणार्थस्येति धनुराकर्षणार्थस्य प्रयत्नस्य विनाश इति । ततः शरस्य गुणस्य च मोक्षणेच्छा च तदनन्तरं प्रयत्नो मोक्षणार्थः तमपेक्षमाणादात्माङ्गुलिसंयोगादङ्गु

(१) ज्याङ्गुलिशरविभागः- पा० ५ पु० ।

लिकर्म तस्माज्ज्याङ्गुलिविभागः शरगुणाभ्याम् ततो विभागाच्छरगुणाङ्गुलिसंयोगविनाशस्तस्मिन् संयोगे विनष्टे प्रतिबन्धकाभावाद्यदा धनुषि वर्तमानः स्थितिस्थापकः संस्कारो मण्डलीभूतं धनुर्यथावस्थितं स्थापयति तं संस्कारमपेक्षमाणाद्धनुर्ज्यासंयोगाज्ज्यायां शरे च कर्मोत्पद्यते तत्कर्म स्वकारणापेक्षं धनुर्ज्यासंयोगापेक्षं ज्यायां संस्कारं वेगाख्यं करोति तं च संस्कारमपेक्षमाण इषुज्यासंयोगो नोदनं नोद्यस्येषोर्नोदकस्य गुणस्य सहगमनहेतुत्वात् तस्मात् नोदनादिषावाद्यं कर्म संस्कारमारभते तस्मात् संस्कारात् नोदनसहायात् तावत् कर्माणि भवन्ति यावदिषुज्याविभागो विभागान्निवृत्ते नोदने कर्माणि उत्तराणि संस्कारादेव वेगाख्याद्भवन्ति यावत्पतनमिषोरेतस्य च पातो गुरुत्वप्रतिबन्धकसंस्कारक्षयात् । अत्र चोदयति । बहूनि कर्माणि क्रमशः कस्मादिति । ज्याविभक्तस्येषोरन्तराले क्रमशो बहूनि कर्माणि भवन्तीति कस्मात् कल्प्यते एकमेव कर्म कुतो न कल्पितमित्यभिप्रायः । समाधत्ते । संयोगबहुत्वादिति । उत्तरसंयोगान्तं कर्मेत्यवस्थितम् क्षिप्तस्येषोरन्तराले बहवः संयोगा दृश्यन्ते तेन बहूनि कर्माणि भवन्तीत्याश्रीयते । एकस्तु संस्कारोऽन्तराले कर्मणोऽपेक्षाकारणाभावात् नोदनाभिघातयोरन्यतरापेक्षं कर्म संस्कारमारभते न कर्ममात्रं वेगाभावात् । न चान्तराले नोदनं नाप्यभिघातस्तस्मादेक एव शरज्यासंयोगापेक्षेण शरकर्मणा प्रथमं कृतो विशिष्टः संस्कारो यावत्पतनमनुवर्तते यथा यथा चास्य कार्यकरणाच्छक्तिः क्षीयते तथा तथा कार्यं मन्दतरतमादिभेदभिन्नमुपजायते यथा तरोस्तरुणस्य फलं प्रकृष्यते ऽपकृष्यते च जीर्णस्य ॥

**एवमात्माधिष्ठितेषु सत्प्रत्ययमसत्प्रत्ययं च कर्मोक्तम् । अनधिष्ठितेषु बाह्येषु चतुर्षु[१] महाभूतेष्वप्रत्ययं कर्म गमनमेव नोदनादिभ्यो भवति । तत्र नोदनं गुरुत्वद्रवत्ववेगप्रयत्नान् समस्तव्यस्तानपेक्षमाणो यः संयोगविशेषो नोदनमविभागहेतोरेकस्य[२] कर्मणः कारणम् तस्माच्चतुर्ष्वपि महाभूतेषु कर्म भवति ॥**

उपसंहरति । एवमिति । अनधिष्ठितेषु बाह्येषु चतुर्षु महाभूतेष्वप्रत्ययं गमनमेव नोदनादिभ्यो भवति आत्मना असाधारणेन सम्बन्धिनानधि-

(१) तेषु-पा० ६ पु० । (२) अविभागकृत एकस्य-पा० १ पु० ।

ष्ठितेषु बाह्येष्वप्रयत्नपूर्वकं गमनाख्यमेव कर्म भवति नोत्क्षेपणापक्षेपणादिकमित्यर्थः(१)। महाभूतेषु नोदनादिभ्यः कर्म भवतीत्युक्तम्। अथ किं नोदनमत आह। तत्र नोदनं गुरुत्वद्रवत्वप्रयत्नवेगान् समस्तव्यस्तानपेक्षमाणो यः संयोगविशेषः कथम् संयोगविशेषो नोदनमुच्यते तत्राह। नोदनमविभागहेतोः कर्मणः कारणमिति। नोद्यनोदकयोः परस्परविभागं न करोति यत्कर्म तस्य कारणं नोदनम्॥

यथा पङ्काख्यायां पृथिव्याम्। वेगापेक्षो यः(२) संयोगविशेषो विभागहेतोरेकस्य(३) कर्मणः कारणं सोऽभिघातः(४)। तस्मादपि चतुर्षु महाभूतेषु कर्म भवति यथा पाषाणादिषु निष्ठुरे वस्तुन्यभिपतितेषु तथा पादादिभिर्नुद्यमानायामभिहन्यमानायां वा पङ्काख्यायां पृथिव्यां(५) यः संयोगो नोदनाभिघातयोरन्यतरापेक्ष उभयापेक्षो वा स संयुक्तसंयोगः तस्मादपि पृथिव्यादिषु कर्म भवति। ये च प्रदेशा न नुद्यन्ते नाप्यभिहन्यन्ते तेष्वपि कर्म जायते। पृथिव्युदकयोर्गुरुत्वविधारकसंयोगप्रयत्नवेगाभावे सति गुरुत्वाद्यदधोगमनं तत्पतनम्। यथा मुसल(६)शरीरादिषूक्तम्। तत्राद्यं गुरुत्वाद्द्वितीयादीनि तु गुरुत्वसंस्काराभ्याम्॥

किमुक्तं स्यान्नोदनेन संयोगेन सह नोदको नोद्यं नोदयति नान्यथा तेनायं नोदनमुच्यते नोदनं तु क्व कर्मकारणमत्राह। यथा पङ्काख्यायां पृथिव्यामिति। यदा पङ्कस्योपरि मन्दव्यवस्थापिता प्रस्तरगुटिका क्रमशः पङ्केन सममधो गच्छति तदा गुरुत्वापेक्षः प्रस्तरपङ्कसंयोगो नोदनम्। यदा प्रयत्नेन दूरमुत्थाप्य प्रस्तरेणाभिहन्यते पङ्कस्तदा गुरुत्वप्रयत्नवेगापेक्षः संयोगो नोदनं यदा जलेनाहन्यते तदा समस्तापेक्षः संयोगो नोदनमिति यथासम्भवमूह्यमिति॥

(१) अपक्षेपणादिरूपमित्यर्थः—पा॰ २ पु॰। (२) वेगाख्यो यः—पा॰ ५ पु॰।
(३) विभागकृत एकस्य—पा॰ १ पु॰। (४) सोऽभिघाताख्यः—पा॰ ५ पु॰।
(५) पृथिव्यां—इति नास्ति १ पु॰। (६) मुषल—पा॰ ५ पु॰।

वेगापेक्षो यः संयोग एकस्य विभागकृतः कर्मणः कारणं सोऽभिघातः अभिघात्याभिघातकयोः परस्परविभागो यतः कर्मणो जायते तस्यैवैकस्य हेतुर्यः संयोगविशेषः सोऽभिघातः तस्मादपि चतुर्षु महाभूतेषु कर्म भवति। यथा पाषाणादिषु निष्ठुरे वस्तुन्यभिपतितेषु। नोदनं परस्पराविभागहेतोरेवैकस्य कर्मणः कारणं न परस्परविभागहेतोः एवमभिघातोऽपि परस्परविभागहेतोरेवैकस्य कर्मणः कारणं न परस्पराविभागहेतोरिदमुक्तमेकस्य कर्मणः कारणम् । संयुक्तसंयोगं व्याचष्टे। पादादिभिर्नुद्यमानायामिति । एकत्र पृथिव्यां पादेन नुद्यमानायामभिहन्यमानायां वा ये प्रदेशा न नुद्यन्ते नाप्यभिहन्यन्ते तेष्वपि कर्म दृश्यते। तत्र चलतां प्रदेशान्तराणां नुद्यमानाभिहन्यमानभूप्रदेशैः सह संयुक्तप्रदेशसंयोगः कारणम् । यत्राभिघातकं द्रव्यं भूप्रदेशमभिहत्य किञ्चिदधो नीत्वोत्पतति तत्र प्रदेशान्तरक्रियायामुभयापेक्ष(१)संयुक्तसंयोगो हेतुः ॥

गुरुत्वस्य कर्मकारणत्वमाह । पृथिव्युदकयोर्गुरुत्वविधारकसंयोगप्रयत्नवेगाभावे गुरुत्वाद्यदधोगमनं तत्पतनम् । यथा मुशलशरीरेष्वादिपूक्तम्। गुरुत्वप्रतिबन्धकस्य हस्तसंयोगस्याभावे मुशलस्य यदधोगमनं तत्पतनं गुरुत्वाद्भवति । एवं गुरुत्वविधारकप्रयत्नाभावे शरीरस्य पतनं क्षिप्तस्येषोरन्तराले वेगाभावात् पतनं गुरुत्वात् । तत्राद्यं कर्म गुरुत्वाद् द्वितीयादीनि तु गुरुत्वसंस्काराभ्याम् । तेषु मुशलादिष्वाद्यं कर्म गुरुत्वाद्भवति तेन कर्मणा संस्कारः क्रियते तदनन्तरमुत्तरकर्माणि(२) गुरुत्वसंस्काराभ्यां जायन्ते द्वयोरपि प्रत्येकमन्यत्र सामर्थ्यावधारणात् ॥

**स्रोतोभूतानामपां स्थला(३)न्निम्नाभिसर्पणं यत्तद्द्रवत्वात् स्यन्दनम्। कथम् समन्ताद्रोधःसंयोगेनावयविद्रवत्वं प्रतिबद्धम् अवयवद्रवत्वमप्येकार्थसमवेतं तेनैव प्रतिबद्धमुत्तरोत्तरावयवद्रवत्वानि संयुक्तसंयोगैः(४) प्रतिबद्धानि। यदा तु मात्रया सेतुभेदः(५) कृतो भवति तदा समन्तात् प्रतिबद्धत्वादवयविद्र-**

(१) क्रियोत्पत्तावुभयापेक्षः-पा० ३ पु० । (२) तदुत्तरोत्तरकर्माणि-पा० ३ पु० । (३) स्थाना-पा० ५ पु० । (४) उत्तरोत्तराणि त्ववयवद्रवत्वानि संयुक्तसंयोगैः-पा० ५ पु० । निमित्तसंयुक्तसंयोगैः-पा० १ पु० । (५) सेतुभङ्गः-पा० ५ पु० ।

**वत्वस्य कार्यारम्भो नास्ति सेतु[1]समीपस्थस्यावयवद्रवत्वस्योत्तरोत्तरेषामवयवद्रवत्वानां प्रतिबन्धकाभावाद्वृत्तिलाभः। ततः क्रमशः संयुक्तानामेवाभिसर्पणम् ततः पूर्वद्रव्य[2]विनाशे सति प्रबन्धेनावस्थितैरवयवैर्दीर्घं द्रव्यमारभ्यते तत्र च कारणगुणपूर्वक्रमेण द्रवत्वमुत्पद्यते तत्र च कारणानां संयुक्तानां प्रबन्धेन गमने[3] यदवयविनि कर्मोत्पद्यते तत् स्यन्दनाख्यमिति॥**

द्रवत्वस्य कारणत्वं कथयति। स्रोतोभूतानामपां स्थलान्निम्नाभिसर्पणं यत्तद्द्रवत्वात् स्यन्दनम् अपां यच्च स्थलान्निम्नाभिसर्पणं तत्स्यन्दनं द्रवत्वादुपजायते इत्यर्थः। कथमिति प्रश्नः। समान्तदित्युत्तरम्। समन्तात् सर्वतो रोधःसंयोगे कूलसंयोगे सति अवयविनो द्रवत्वं प्रतिबद्धं स्यन्दनं वा न करोति अवयवद्रवत्वमप्येकार्थसमवेतं तेनैव प्रतिबद्धं यस्मिन्नवयवे साक्षाद्रोधःसंयोगोऽस्ति तदवयवगतद्रवत्वं तेनैव रोधःसंयोगेन प्रतिबद्धमुत्तरोत्तराणि त्ववयवद्रवत्वानि संयुक्तसंयोगैः प्रतिबद्धानि रोधःसंयुक्तेनावयवेन सह संयोगादवयवान्तरस्य द्रवत्वं प्रतिबद्धमिति। तत्संयोगादपरस्य प्रतिबद्धमित्यनेनैव न्यायेनोत्तरोत्तरद्रवत्वानि प्रतिबद्धानि। यदा तु मात्रया सेतुभेदः कृतो भवति तदा समन्तात् प्रतिबद्धस्यावयविद्रवस्य कार्यारम्भो नास्ति दीर्घतरेण सेतुना समन्तात् प्रतिबद्धस्यावयविनो महापरिमाणस्यैकदेशकृतेनाल्पीयसा मार्गेण निर्गमाभावात् सेतुसमीपस्थस्य त्ववयवद्रवत्वस्य वृत्तिलाभो भवति अल्पस्यावयवस्य तेन मार्गेण निर्गतिसम्भवात् तस्य वृत्तिलाभे चोत्तरेषामवयवद्रवत्वानामपि प्रतिबन्धकाभावाद्वृत्तिलाभः स्वकार्यकर्तृत्वं स्यात्। ततः क्रमशः संयुक्तानामेवाभिसर्पणम्। सेतुसमीपस्थोऽवयवः प्रथममभिसर्पति तदनु तत्समीपस्थस्ततस्तत्समीपस्थः इत्यनेन क्रमेण सर्वेऽवयवा अभिसर्पन्ति ते चाभिसर्पन्तो न परस्परभिन्नदेशा अभि-

(१) सेतोः–पा॰ १ पु॰। (२) ततः द्रव्यसंयोग–पा॰ ५ पु॰। पूर्वसंयोगविनाशे-पा॰ १ पु॰।
(३) गमनेन–पा॰ ६। ७ पु॰।

सर्पन्ति किं तु तथाभिसर्पन्ति यथा परस्परसंयुक्ता भवन्तीत्येतदवद्योतना-र्थमुक्तं संयुक्तानामेवाभिसर्पणम् । न पुनरस्यायमर्थोऽप्रच्युतप्राच्यसंयोगानामेवा-भिसर्पणमिति संस्थानान्तरोपलम्भात् । ततः प्राक्तनसंयोगविनाशे पूर्वद्रव्यविनाशे प्रबन्धेनावस्थितैरवयवैः संयुक्तीभावेनावस्थितैरवयवैर्दीर्घं द्रव्यमारभ्यते तत्र च कारणगुणपूर्वप्रक्रमेण द्रवत्वमुत्पद्यते । अवयवद्रवत्वेभ्यो दीर्घतरेऽवयविनि द्रवत्वमुत्पद्यते तत्र च कारणानां संयुक्तानां प्रबन्धेन गमने यदवयविनि कर्मो-त्पद्यते द्रवत्वात् तत्स्यन्दनम् । तत्र तस्मिन् द्रवत्वे उत्पन्ने सति कारणानाम-वयवानां प्रबन्धेन गमने पङ्क्तीभावेना(१)भिन्नदेशतया गमने यदवयविनि द्रव-त्वात् कर्मोत्पद्यते तत्स्यन्दनाख्यम् ॥

**संस्कारात् कर्म इष्वादिषूक्तम् । तथा चक्रादि-ष्ववयवानां पार्श्वतः प्रतिनियतदिग्देशसंयोगविभा-गोत्पत्तौ यदवयविनः(२) संस्कारादनियतदिग्देशसं-योगविभागनिमित्तं कर्म तद्भ्रमणमिति(३) । एवमा-दयो गमनविशेषाः ॥**

संस्कारात् कर्मेष्वादिषूक्तम् । तथा चक्रादिषु तथाशब्दो यथाशब्द-मपेक्षते यत्तदोर्नित्यसम्बन्धात्(४) । यथा इष्वादिषु संस्कारात् कर्म कथितम् तथा चक्रादिष्वपि भवतीत्यर्थः । एतदेव दर्शयति । अवयवानां पार्श्वतः प्रति-नियतदिग्देशसंयोगविभागोत्पत्तौ यदवयविनः संस्कारादनियतदिग्देशसंयोग-विभागनिमित्तं कर्म तद्भ्रमणम् । पार्श्वतः प्रतिनियता ये दिग्देशास्तैः सहावय-वानां संयोगविभागयोरुत्पत्तौ सत्यां यदवयविनः संस्कारादनियतदिग्देशैः सर्व-तो दिक्कैर्विभागसंयोगनिमित्तं कर्म जायते तद्भ्रमणम् । प्रथमं चक्रावयविनि दण्डसंयोगात् कर्मोत्पद्यते उत्तरोत्तराणि कर्माणि नोदनादभिघातात् कर्मजात् संस्काराच्च भवन्ति । एवं वेगात् दण्डसंयुक्ते चक्रावयवे आद्यं कर्म दण्डसंयोगा-दवयवान्तरेषु च संयुक्तसंयोगात् दण्डसंयुक्तस्यावयवस्योत्तरोत्तरकर्माणि संस्का-रान्नोदनाच्च अपरेषां संस्कारात् संयुक्तसंयोगाच्च दण्डविगमे तु चक्रे तदवयवेषु च संस्कारादेव केवलात् । उपसंहरति । एवमादयो गमनविशेषा इति ॥

---

(१) संयुक्तीभावेना—पा॰ ३ पु॰ ।
(२) तदवयविनि—पा॰ ७ पु॰ ।
(३) तद्भ्रमणाख्यमिति—पा॰ ५ । ६ पु॰ ।
(४) नित्यमभिसम्बन्धात्—पा॰ २ पु॰ ।

प्राणाख्ये तु वायौ कर्म आत्मवायुसंयोगादिच्छाद्वेषपूर्वकप्रयत्नापेक्षाज्जाग्रत इच्छानुविधानदर्शनात् सुप्तस्य तु जीवनपूर्वकप्रयत्नापेक्षात् । आकाशकालदिगात्मनां सत्यपि द्रव्यभावे(१) निष्क्रियत्वं सामान्यादिवदमूर्तत्वात् । मूर्तिरसर्वगतद्रव्यपरिमाणम् तदनुविधायिनी च क्रिया सा चाकाशादिषु नास्ति तस्मान्न तेषां क्रियासम्बन्धोऽस्तीति ॥

प्राणाख्ये वायौ कर्म आत्मवायुसंयोगादिच्छाद्वेषपूर्वकप्रयत्नापेक्षाद्भवतीति। कथमिदं ज्ञातमत आह। इच्छानुविधानदर्शनात् रेचकपूरकादिप्रयोगेष्विच्छानुविधायिनी प्राणक्रियोपलभ्यते नासारन्ध्रप्रविष्टे रजसि तन्निरासार्थं प्राणक्रिया द्वेषादपि भवति अतः प्रयत्नपूर्विकेत्यवगम्यते। सुप्तस्य जीवनपूर्वकप्रयत्नापेक्षादात्मवायुसंयोगात् सुप्तस्य प्राणक्रिया प्रयत्नकार्या प्राणक्रियात्वात् जाग्रतः प्राणक्रियावत्। स चेच्छाद्वेषपूर्वको न भवति सुप्तस्येच्छाद्वेषयोरभावात् तस्माज्जीवनपूर्वक एव निश्चीयते प्राणधारणस्य तत्पूर्वकत्वात्। चतुर्षु महाभूतेष्विवाकाशादिषु कस्मात् क्रियोत्पत्तिर्न चिन्तितेत्याह। आकाशकालदिगात्मनामिति। क्रियात्वं मूर्तत्वेन व्याप्तं मूर्तत्वं चाकाशादिषु नास्ति अतः क्रियावत्त्वमपि न विद्यते इत्यर्थः। एतदेव विवृणोति। मूर्तिरित्यादिना। तद्व्यक्तम् ॥

सविग्रहे मनसीन्द्रियान्तरसम्बन्धार्थं जाग्रतः कर्म आत्ममनःसंयोगादिच्छाद्वेषपूर्वकप्रयत्नापेक्षात् अन्वभिप्रायमिन्द्रियान्तरेण विषयान्तरोपलब्धिदर्शनात्। सुप्तस्य प्रबोधकाले जीवनपूर्वकप्रयत्नापेक्षात्। अपसर्पणकर्मोपसर्पणकर्म चात्ममनःसंयोगाददृष्टापेक्षात्(२)। कथम् यदा जीवनसहकारिणोर्धर्माधर्मयोरुपभोगात् प्रक्षयोऽन्योन्याभिभवो वा(३) तदा जीवनस-

(१) द्रव्यत्वे-पा॰ ७ पु॰। (२) इच्छापेक्षात्-पा॰ ७ पु॰।
(३) भवति-इत्यधिकं ५ पु॰।

हाययोर्वैकल्यात्(१) तत्पूर्वकप्रयत्नवैकल्यात् प्राणनिरोधे(२) सत्यन्याभ्यां लब्धवृत्तिभ्यां(३) धर्माधर्माभ्यामात्ममनःसंयोगसहायाभ्यां मृतशरीराद्विभागकारणमपसर्पणकर्मोत्पद्यते। ततः शरीराद्बहिरपगतं ताभ्यामेव धर्माधर्माभ्यां समुत्पन्नेनातिवाहिकशरीरेण सम्बध्यते तत्सङ्क्रान्तं च स्वर्गं नरकं वा गत्वा आशयानुरूपेण शरीरेण सम्बद्ध्यते(४) तत्संयोगार्थं कर्मापसर्पणमिति(५)। योगिनां च बहिरुद्रेचितस्य मनसोऽभिप्रेतदेशगमनं प्रत्यागमनं च। तथा सर्गकाले प्रत्यग्रेण शरीरेण सम्बन्धार्थं कर्मादृष्टकारितम्। एवमन्यदपि महाभूतेषु यत्प्रत्यक्षानुमानाभ्यामनुपलभ्यमानकारणमुपकारापकारसमर्थं च भवति तदप्यदृष्टकारितम्। यथा सर्गादावणुकर्म अग्निवाय्वोरूर्ध्वतिर्यग्गमने महाभूतानां प्रक्षोभणम्। अभिषिक्तानां मणीनां(६) तस्करं प्रति गमनम्। अयसोऽयस्कान्ताभिसर्पणं चेति॥

## इति प्रशस्तपादभाष्ये कर्मपदार्थः(७) समाप्तः॥

मनसि कर्मकारणमाह। सविग्रह इति। जाग्रतः पुरुषस्य सविग्रहे मनसि सशरीरे मनसीन्द्रियान्तरसम्बन्धार्थं कर्म आत्ममनःसंयोगादिच्छाद्वेषपूर्वकप्रयत्नापेक्षाद्भवति इच्छाद्वेषपूर्वकः प्रयत्नो जाग्रतो मनसि क्रियाहेतुरिति। कथमेतदवगतं तत्राह। अन्वभिप्रायमिन्द्रियान्तरेण विषयोपलब्धिदर्शनात् जागरावस्थायामभिप्रायानतिक्रमेणेन्द्रियान्तरेण चक्षुरादिना विषयोपलब्धिर्दृश्यते। यदा रूपं जिघृक्षते(८) पुरुषस्तदा रूपं पश्यति यदा रसं जिघृक्षते तदा रसं

(१) जीवनसहकारिवैकल्ये-पा० १ पु०। जीवनसहायवैकल्ये-पा० ६। ७ पु०।
(२) प्राणवायोर्निरोधे-पा० ५ पु०।
(३) लब्धवृत्तिभ्यां-पा० ५ पु०।
(४) संयुज्यते-पा० १ पु०।
(५) उपसर्पणाख्यम्-पा० १ पु०।
(६) अधिवासितमणीनां-पा० क्वचित्।
(७) इति प्रशस्तपादाचार्यविरचिते वैशेषिकभाष्ये कर्मपदार्थः-पा० ७ पु०।
(८) जिघृक्षति-पा० ३ पु०।

रसयति न चान्तःकरणसम्बन्धमन्तरेण बाह्येन्द्रियस्य विषयग्राहकत्वमस्ति तस्मादिच्छाद्वेषपूर्वकात् प्रयत्नान्मनसि क्रिया भूतेति गम्यते। सुप्तस्येति। सुप्तस्य पुरुषस्येन्द्रियान्तरसम्बन्धार्थं प्रबोधकाले मनसि क्रिया जीवनपूर्वकप्रयत्नापेक्षा-दात्ममनसोः संयोगात्। अपसर्पणेति। एतदपि कथमित्यादिना प्रश्नपूर्वकं कथयति। विशिष्टात्ममनःसंयोगो जीवनम् तस्य स्वकार्यकरणे धर्माधर्मौ सह-कारिणौ यदा तयोरुपभोगात् प्रक्षये विनाशोऽन्योन्याभिभवो वा परस्परप्रतिब-न्धात् स्वकार्याकरणं वा ततो जीवनसहाययोः धर्माधर्मयोर्वैकल्ये ऽभावे सति तत्पूर्वकप्रयत्नवैकल्यात् जीवनपूर्वकस्य प्रयत्नस्य वैकल्यादभावात् प्राणवा-योर्निरोधे सति पतिते ऽस्मिन् शरीरे याभ्यां धर्माधर्माभ्यां देहान्तरे फलं भोजयितव्यं तौ लब्धवृत्तिकौ भूतावैहिकशरीरोपभोग्यधर्माधर्मप्रतिबद्धत्वाद् देहान्तरभोग्याभ्यां धर्माधर्माभ्यां कार्यं न कृतम् यदा त्वैहिकशरीरोपभोग्यौ धर्माधर्मौ प्रक्षीणौ तदा देहान्तरोपभोग्यधर्माधर्मयोर्वृत्तिलाभः प्रतिबन्धाभा-वाज्जातः ताभ्यां लब्धवृत्तिभ्यामैहिकदेहोपभोग्यात् कर्मणोऽन्याभ्यामात्मम-नःसंयोगसहायाभ्यां मृतशरीरान्मनसो विभागकारणमपसर्पणकर्मोत्पद्यते। अपसर्पणकर्मोत्पत्तावात्ममनःसंयोगोऽसमवायिकारणम् मनः समवायिकारणम् लब्धवृत्तौ धर्माधर्मौ निमित्तकारणम्। ततस्तदनन्तरं तन्मनो मृतशरीराद्बहि-र्निर्गतं ताभ्यामेव लब्धवृत्तिभ्यां धर्माधर्माभ्यां सकाशादुत्पन्नेनातिवाहिकशरी-रेण सम्बध्यते तत्संक्रान्तं तदातिवाहिकशरीरसंक्रान्तं मनः स्वर्गं नरकं वा गच्छति तत्र गत्वा आशयानुरूपेण कर्मानुरूपेण शरीरेण सम्बध्यते। स्वर्गे नरके वा यदुपजातं शरीरं तत्र तावन्मनःसम्बन्धेन भवितव्यम् अन्यथा तस्मिन् देशे भोगासम्भवात्। न चात्मवदगत्वैव मनसो देहान्तरसम्बन्धोऽस्ति अव्याप-कत्वात्। गमनं च तस्यैतावद्दूरं केवलस्य न सम्भवति महाप्रलयानन्तराव-स्थाव्यतिरेकेणाशरीरस्य मनसः कर्माभावात्। तस्मान्मृतशरीरप्रत्यासन्नमदृ-ष्टवशादुपजातक्रियैरणुभिर्द्व्यणुकादिप्रक्रमेणारब्धमतिसूक्ष्ममनुपलब्धियोग्यं श-रीरं परिकल्प्यते। तच्च मृतशरीरमतिक्रम्य मनसः स्वर्गनरकादिदेशातिवा-हनधर्मकत्वादातिवाहिकमित्युच्यते। मरणजन्मनोरन्तराले मनसः कर्म शरीरोपगृहीतस्यैवोपपद्यते महाप्रलयानन्तरावस्थाभाविमनःकर्मव्यतिरिक्तत्वे सति मनःकर्मत्वात् दृश्यमानशरीरवृत्तिमनःकर्मवत्। आगमश्चात्र संवादको

दृश्यते इति । तत्संयोगार्थं च कर्मोपसर्पणमिति । तेन स्वर्गे नरके वा प्रत्यग्रजातेन शरीरेण मनःसंयोगार्थं कर्मोपसर्पणमिति । योगिनां च वहिरुद्रेचितस्य वहिर्निःसारितस्य मनसोऽभिप्रेतदेशगमनं प्रत्यागमनं च । तथा सर्गकाले प्रत्यग्रेण शरीरेण सम्बन्धार्थं मनःकर्मादृष्टकारितम् । न केवलमेतावत् सर्वमन्यदपि महाभूतेषु यत्प्रत्यक्षानुमानाभ्यामनुपलभ्यमानकारणमुपकारापकारसमर्थं तदप्यदृष्टकारितम् । यथा सर्गादावणुकर्म अग्निवाय्वोर्यथासंख्यमूर्ध्वतिर्यग्गमने महाभूतानां भूगोलकादीनां च प्रक्षोभणं चलनम् । परीक्षाकालेऽभिषिक्तानां मणीनां तस्करं प्रति गमनम् । अयसोऽयस्कान्ताभिसर्पणं च सर्वमेतददृष्टकारितमिति ॥

हिताहितफलोपायप्राप्तित्यागनिबन्धनम् ।
कर्मेति परमं तत्त्वं यत्नतः क्रियतां हृदि ॥

इति भट्टश्रीश्रीधरकृतायां पदार्थप्रवेशन्यायकन्दलीटीकायां कर्मपदार्थः समाप्तः ॥

---

## अथ सामान्यपदार्थनिरूपणम् ।

**सामान्यं द्विविधम् परमपरं च । स्वविषयसर्वगतमभिन्नात्मकमनेकवृत्ति(१)एकद्विबहुष्वात्मस्वरूपानुगमप्रत्ययकारि(२) स्वरूपाभेदेनाधारेषु प्रबन्धेन वर्तमानमनुवृत्तिप्रत्यय(३)कारणम् । कथम् प्रतिपिण्डं सामान्यापेक्षं प्रबन्धेन ज्ञानोत्पत्तावभ्यासप्रत्ययजनिताच्च संस्कारादतीतज्ञानप्रबन्धप्रत्यवेक्षणाद् यदनुगत(४)मस्ति तत्सामान्यमिति । तत्र सत्तासान्यं परमनुवृत्तिप्रत्ययकारणमेव । यथा परस्परविशिष्टेषु चर्मवस्त्रकम्बलादिष्वेकस्मा(५)नीलद्रव्या(६)भिसम्बन्धात् नीलं नीलमिति प्रत्ययानुवृत्तिः तथा परस्परविशिष्टेषु**

---

(१) सर्वगतमभेदात्मकमनेकवृत्ति-पा· ६ पु· । (२) अनुवृत्तिप्रत्ययकारणं-पा· ५ पु· ।
(३) अनुवृत्तिबुद्धिकारणं पा· ५ पु· । (४) यत् सदनुगतमस्ति-पा· १ पु· ।
(५) कम्बलादिष्वन्यस्मात्-पा· ५ पु· । (६) नीलद्रव्या-पा· ६ पु· ।

द्रव्यगुणकर्मस्वविशिष्टा सत्सदिति प्रत्ययानुवृत्तिः सा चार्थान्तराद्भवितु(१)मर्हतीति यत्तदर्थान्तरं सा सत्तेति सिद्धा। सत्तानुसम्बन्धात् सत्सदिति प्रत्ययानुवृत्तिः तस्मात् सा(२) सामान्यमेव। अपरं द्रव्यत्वगुणत्वकर्मत्वादि अनुवृत्तिव्यावृत्ति(३)हेतुत्वात् सामान्यं विशेषश्च भवति। तत्र द्रव्यत्वं परस्परविशिष्टेषु पृथिव्यादिष्वनुवृत्तिहेतुत्वात्(४) सामान्यम् गुणकर्मभ्यो व्यावृत्तिहेतुत्वात्(५) विशेषः। तथा गुणत्वं परस्परविशिष्टेषु रूपादिष्वनुवृत्तिहेतुत्वात् सामान्यम् द्रव्यकर्मभ्यो व्यावृत्तिहेतुत्वात्(६)विशेषः। तथा कर्मत्वं परस्परविशिष्टेषूत्क्षेपणादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यं द्रव्यगुणेभ्यो व्यावृत्तिहेतुत्वाद्विशेषः(७) एवं पृथिवीत्वरूपत्वोत्क्षेपणत्वगोत्वघटत्वपटत्वादीनामपि प्राण्यप्राणिगतानामनुवृत्तिव्यावृत्तिहेतुत्वात्(८) सामान्यविशेषभावः सिद्धः। एतानि तु द्रव्यत्वादीनि प्रभूतविषयत्वात् प्राधान्येन सामान्यानि स्वाश्रयविशेषकत्वाद्भक्त्या विशेषाख्यानीति॥

जयन्ति जगदुत्पत्तिस्थितिसंहृतिहेतवः।
विश्वस्य परमात्मानो ब्रह्मविष्णुमहेश्वराः॥

सामान्यं व्याचष्टे। द्विविधं सामान्यं परमपरं चेति। कृतव्याख्यानमेतदुद्देशावसरे। सर्वसर्वगतं सामान्यमिति केचित् तन्निषेधार्थमाह।

---

(१) सा चार्थान्तरसम्बन्धाद्भवितु–पा॰ ५ पु॰। (२) सत्ता–पा॰ ५ पु॰।
(३) अनुवृत्तिव्यावृत्तिप्रत्ययहेतुत्वात्-पा॰६पु॰। (४) अनुवृत्तिप्रत्ययहेतुत्वात्–पा॰ ५ पु॰।
(५) व्यावृत्तिप्रत्ययहेतुत्वात्–पा॰ ५ पु॰। (६) व्यावृत्तिप्रत्ययहेतुत्वात्–पा॰ ५ पु॰।
(७) तथा कर्मत्वं परस्परविशिष्टेषूत्क्षेपणादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यं द्रव्यगुणेभ्यो व्यावृत्तिहेतुत्वाद्विशेषः–इति नास्ति १ पु॰।
(८) अनुवृत्तिव्यावृत्तिप्रत्ययहेतुत्वात्–पा॰ ५ पु॰।

स्वविषयसर्वगतमिति। यत्सामान्यं यत्र पिण्डे प्रतीयते स तस्य स्वो विषयः तत्र सर्वस्मिन् गतं समवेतं सर्वत्र तत्प्रत्ययात् । सर्वसर्वगतत्वाभावे त्वनुपलब्धिरेव प्रमाणम् । अभिन्नात्मक(¹)मभिन्नस्वभावम् । येन स्वभावेनैकत्र पिण्डे वर्तते सामान्यं तेनैव स्वभावेन पिण्डान्तरेऽपि वर्तते तत्प्रत्ययाविशेषादित्यर्थः । अनेकेषु पिण्डेषु वृत्तिर्यस्य तदनेकवृत्ति अभिन्नस्वभावमनेकत्र वर्तते इति च प्रतीतिसामर्थ्यात् समर्थनीयम् । नहि प्रमाणावगतेऽर्थे काचिदनुपपत्तिर्नाम द्वित्वादिकमप्यभिन्नस्वभावमनेकत्र वर्तते तस्मात् सामान्यस्य विशेषो न लभ्यते तत्राह । एकद्विबहुष्विति। सामान्यमेकस्मिन् पिण्डे द्वयोः पिण्डयोर्बहुषु वा पिण्डेष्वात्मस्वरूपानुगमप्रत्ययं करोति एकस्य पिण्डस्य द्वयोर्बहूनां वोपलम्भे सति गौरितिप्रत्ययस्य भावाद् द्वित्वादिकं त्वेवं न भवतीति विशेषः । अनेकवृत्तित्वे सति यदेकद्विबहुष्वात्मस्वरूपानुगमप्रत्ययकारणं तत् सामान्यमिति लक्षणार्थः । एतदेव विवृणोति । स्वरूपाभेदेनेति । एकस्मिन् पिण्डे यत् स्वरूपं तत्पिण्डान्तरेऽपि तस्मादभेदेनाधारेषु प्रबन्धेनानुपरमेण पूर्वपूर्वपिण्डापरित्यागेन वर्तमानं सदनुवृत्तिप्रत्ययकारणं स्वरूपानुगमप्रतीतिकारणं सामान्यम् । कथमिति परस्य प्रश्नः । कथमनेकेषु पिण्डेषु सामान्यस्य वृत्तिरवगम्यते इत्यर्थः । उत्तरमाह । प्रतिपिण्डमिति । पिण्डं पिण्डं प्रति सामान्यापेक्षं यथा भवति तथा ज्ञानोत्पत्तौ सत्यां योऽभ्यासप्रत्ययस्तेन यः संस्कारो जनितः तस्मादतीतस्य ज्ञानप्रबन्धस्य ज्ञानप्रवाहस्य प्रत्यवेक्षणात् स्मरणाद् यदनुगतमस्ति तत्सामान्यम् । किमुक्तं स्यात् एकस्मिन् पिण्डे सामान्यमुपलभ्य पिण्डान्तरे तस्य प्रत्यभिज्ञानादेकस्यानेकवृत्तित्वमवगम्यते । अत एव तत्र बाधकहेतवः प्रत्यक्षविरोधादपास्यन्ते । यत्पूर्वमुक्तं परमपरं च द्विविधं सामान्यमिति तदिदानीं विविच्य कथयति । तत्र परं सत्तासामान्यमनुवृत्तिप्रत्ययकारणमेव । यद्यपि प्रत्यक्षेण प्रतीयते सत्ता तथापि विप्रतिपन्नं प्रत्यनुमानमाह । यथा परस्परविशिष्टेष्विति । तद्युक्तम् । द्रव्यादिषु सत्सदितिप्रत्ययानुवृत्तिः व्यतिरिक्तप्रत्ययनिबन्धना भिन्नेषु प्रत्ययानुवृत्तित्वात् चर्मवस्त्रादिषु (²) नीलप्रत्ययानुवृत्तिवत् । यस्मात् सत्ता त्रिषु द्रव्यादिषु प्रत्ययानुवृत्तिं करोति न व्यावृत्तिं तस्मात् सामान्यमेव न विशेष इत्युपसंहा-

(१) अभेदात्मक-पा· ३ पु· । (२) चर्मवदस्त्रादिषु-पा· २ । ४ पु· ।

रार्थः । अपरं द्रव्यत्वगुणत्वकर्मत्वादि अनुवृत्तिव्यावृत्तिहेतुत्वात् सामान्यं विशेषश्च भवति । द्रव्यत्वं द्रव्येष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यम् गुणकर्मभ्यो व्यावृत्तिहेतुत्वाद्विशेषः । गुणत्वं गुणेष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यम् द्रव्यकर्मभ्यो व्यावृत्तिप्रत्ययहेतुत्वाद्विशेषः । तथा कर्मत्वं परस्परविशिष्टेषूत्क्षेपणादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यं द्रव्यगुणेभ्यो व्यावृत्तिहेतुत्वाद्विशेषः । द्रव्यत्वादिवत्पृथिवीत्वादीनामप्यनुवृत्तिव्यावृत्तिप्रत्ययहेतुत्वात् सामान्यविशेषभावोऽस्तीत्याह । एवमिति । प्राणिगतानि सामान्यानि गोत्वाश्वत्वादीनि अप्राणिगतानि घटत्वपटत्वादीनि । किं द्रव्यत्वादीनां सामान्यस्वरूपं (१) वास्तवं किं वा विशेषस्वरूपता आहोस्विदुभयस्वरूपता अत्राह । एतानीति । समानानां भावः सामान्यमिति सामान्यलक्षणं द्रव्यत्वादिषु विद्यते स्वाश्रयं सर्वतो विशिनष्टीति विशेष इति तु लक्षणं नास्ति । अत एतानि मुख्यया वृत्त्या सामान्यान्येव न विशेषाः विशेषसञ्ज्ञां तूपचारेण लभन्ते । विशेषो हि स्वाश्रयं सर्वतो विशिनष्टि द्रव्यत्वादिकमपि विजातीयेभ्यः स्वाश्रयस्य विशेषण(२)मित्येतावता साधर्म्येणोपचारप्रवृत्तिः ॥

**लक्षणभेदादेषां द्रव्यगुणकर्मभ्यः पदार्थान्तरत्वं सिद्धम् । अत एव च नित्यत्वम् । द्रव्यादिषु वृत्तिनियमात् प्रत्ययभेदाच्च परस्परतश्चान्यत्वम्(३) । प्रत्येकं स्वाश्रयेषु लक्षणाविशेषाद्विशेषलक्षणाभावाच्चैकत्वम् । यद्यप्यपरिच्छिन्नदेशानि सामान्यानि भवन्ति तथाप्युपलक्षणनियमात् कारणसामग्रीनियमाच्च स्वविषयसर्वगतानि । अन्तराले च संयोगसमवायवृत्त्यभावादव्यपदेश्यानीति ॥**

**इति प्रशस्तपादभाष्ये(४) सामान्यपदार्थः समाप्तः ॥**

---

(१) सामान्यरूपं–पा० १ पु० ।
(२) विशेषकं–पा० ३ पु० ।
(३) परस्परश्चान्यत्वं–पा० ५ पु० ।
(४) इति प्रशस्तपादाचार्यविरचिते वैशेषिकभाष्ये–पा० ७ पु० ।

द्रव्यत्वादीनि द्रव्यादिव्यतिरिक्तानि न भवन्ति अतस्तेषां पृथक्कार्यनिरूपणमन्याय्यमित्यचाह । लक्षणभेदादिति । अनुगताकारबुद्धिवेद्यानि द्रव्यत्वादीनि व्यावृत्तिबुद्धिवेद्याश्च द्रव्यादिव्यक्तयः तस्मादेषां द्रव्यत्वादीनां लक्षणभेदात् प्रतीतिभेदाद् द्रव्यगुणकर्मभ्यः पदार्थान्तरत्वम् । अत एव च नित्यत्वम् । यत एव सामान्यस्य द्रव्यादिभ्यो भेदः अत एव नित्यत्वम् द्रव्याद्यभेदे सामान्यस्य द्रव्यादिविनाशे विनाशस्तदुत्पादे चोत्पादः स्यात् भेदे तु नायं विधिरवतिष्ठते इति ॥

अचैके वदन्ति(१) भिन्नेष्वनुगता बुद्धिः सामान्यं व्यवस्थापयति सा च प्रतिपिण्डं दण्डपुरुषाविव न स्वातन्त्र्येण(२) सामान्यविशेषलक्षणे द्वे वस्तुनी प्रतिभासयति नापि तयोर्विशेषणविशेष्यभावं गोत्वी गोत्ववानित्येवमनुदयात् । किं तु तादात्म्यग्राहिणी प्रतीतिरियम् गौरयमित्येकात्मतापरामर्शात् उभयोरन्योन्यप्रहाणेन स्वरूपान्तराभावाच्च अनुवृत्तता हि गोत्वस्येव सामान्यान्तरस्यापि स्वरूपं व्यावृत्ततापि गोव्यक्तेर्व्यक्त्यन्तराणामपि(३) स्वभावः सामान्यान्तरव्यावृत्तं तु गोत्वस्य स्वरूपम् व्यक्त्यन्तरव्यावृत्तिश्च गोव्यक्तेः स्वभावः परस्परात्मतामन्तरेणान्यो(४) न शक्यते निर्देष्टुम् । न च तस्य स एव स्वभावः स एव च सम्बन्धीत्युपपद्यते निःस्वभावस्य सम्बन्ध्याभावात् तस्माज्जातिव्यक्त्योः परस्परात्मतैव तत्त्वम् । एवं सति भेदाभेदवादोऽपि सिद्ध्यति । यथा हि शावलेयो(५) गौरित्येवं प्रतीयते तथा बाहुलेयोऽपि । न चास्ति कस्यचिद्बाधः शावलेय एव गौर्न बाहुलेय इति किं तु सर्वेषामेकमतित्वमेव स गौरयमपि गौरिति । तच प्रतीतिबलेन शावलेयात्मकस्य गोत्वस्य बाहुलेयात्मकत्वे सिद्धे शावलेयाद्भेदोऽपि सिद्ध्यति । अयमेव हि सामान्यस्य पूर्वपिण्डाद्भेदो यत्पिण्डान्तरात्मकत्वम् । इदमेव च सामान्यरूपत्वं यदुभयात्मकत्वम् । भेदाभेदावेकस्य विरुद्धाविति चेत् न युक्तिज्ञस्य भवतः साम्प्रतमेतदभिधातुम् । तद्विरुद्धं यच बुद्धिर्विपर्येति यत्तु सर्वदा प्रमाणेन तथैव प्रतीयते तच विरोधाभिधानमेव विरुद्धम् । अन्यचैवं

(१) अत्र वदन्ति-पा॰ २ पु॰ । (२) स्वतन्त्रे-पा॰ ३ पु॰
(३) गोव्यक्तिरिव व्यक्त्यन्तराणामपि-पा॰ ३ पु॰ । (४) आत्मतामन्तरेणान्योन्यं-पा॰ ३ पु॰ ।
(५) सावलेयो-पा॰ ३ पु॰ । एवमग्रेऽपि ।

न दृष्टमिति चेत् किं वै प्रत्यक्षमपि अनुमानमिव दूरमनुसरति हतं तर्हीदमनवस्थया। अथेदं स्वसामर्थ्यात् प्रवर्तते(१) तदा यथा यद्वस्तु यद्दर्शयति तथैव तत् न त्वेतदन्यथादर्शनेन प्रत्याख्यानमर्हति सर्वभावप्रत्याख्यानप्रसङ्गात्। तस्मात् सामान्यं व्यक्त्युत्पादविनाशयोरुत्पादविनाशवत्त्वाद्व्यक्त्यन्तरावस्थाने चावस्थाना(२)न्नित्यमनित्यं च न पुनर्नित्यमेव। एवं प्राप्ते ऽभिधीयते। किं जातिव्यक्त्योरविलक्षणमाकारं गृह्णाति तत्प्रतीतिः उत तयोरभेदं गृह्णाति आहोस्वित् परस्परविलक्षणावाकारौ। आद्ये कल्पे तावदेकमेव वस्तु स्यात् नोभयोरेकात्मकत्वमविलक्षणाकारबुद्धिवेद्यत्वस्याभेदलक्षणत्वात्। द्वितीये तु कल्पे व्याहतिरेव। विलक्षणाकारसंवित्तिरेव हि भेदसंवित्तिस्तस्याः सम्भवे सति तयोरभेदप्रतिपत्तिरेव नास्ति कथं भिन्नयोरभेदो व्यवस्थाप्यते कथं तर्हि तादात्म्यप्रतीतिः न कथञ्चिदिति वदामः। यदि तावदेक आकारोऽनुभूयते एकस्यैव वस्तुनः प्रतीतिरियं नोभयोः। अथ द्वावाकारावनुभूयेते तदास्याः प्रतीतेरसम्भव एव। यत्पुनर्गौरित्ययमविभागेन संवेदनं तत्समवायसामर्थ्यात् संयोगे हि द्वयोः संसर्गावभासः समवायस्य पुनरेष महिमा यदव सम्बन्धिनावयःपिण्डवह्निवत् पिण्डीभूतावेव प्रतीयेते जातिरेव न च व्यक्तेः स्वरूपम् तेन सत्यपि भेदे बदरादिवत् कुण्डस्य जातितो व्यक्तेः स्वरूपं पृथङ्न निष्कृष्यते परस्परपरिहारेण तूपलम्भोस्त्येव दूरे गोत्वाग्रहणे ऽपि पिण्डस्य ग्रहणात् पूर्वपिण्डाग्रहणेऽपि पिण्डान्तरे गोत्वग्रहणात् तस्माद्व्यक्तेरत्यन्तं भिन्नमेव सामान्यमिति तार्किकाणां प्रक्रिया॥

द्रव्यादिषु वृत्तिनियमात् प्रत्ययभेदाच्च परस्परतश्चान्यत्वम्। द्रव्यत्वादयः प्रत्येकं द्रव्यादिष्वेव नियताः प्रत्ययभेदश्चैतेषु दृश्यते तस्माद्द्रव्यादिषु वृत्तिनियमात् प्रत्ययभेदाच्च द्रव्यत्वादीनां परस्परतो भेदः। अभेदात्मकं सामान्यमिति पूर्वं प्रतिज्ञामात्रेणोक्तं तदिदानीं प्रमाणसिद्धं करोति। प्रत्येकं स्वाश्रयेष्विति। लक्ष्यतेऽनेनेति लक्षणमनुगताकारज्ञानम्। तस्य प्रत्येकं प्रतिपिण्डमविशेषाद्विलक्षणस्याभावाद्विशेषे भेदे लक्षणस्य प्रमाणस्याभावाच्च सामान्यस्य स्वाश्रयेष्वेकत्वमभिन्नस्वभावमित्यर्थः। स्वविषये सर्वत्र सामान्यं समवैति नान्यत्रेति यत्पूर्वमुक्तं तस्य कारणमाह। यद्यपीति। यद्यपि सामा-

(१) प्रतीयते-पा॰ ३ पु॰। (२) व्यवस्थानात्-पा॰ १ पु॰।

न्यानि यत्र तत्रोपजायमानेन पिण्डेन सम्बन्धादपरिच्छिन्नदेशान्यनियतदेशानि तथाप्युपलक्षणस्याभिव्यञ्जकस्यावयवसंस्थानविशेषस्य नियमान्नियतत्वात् पिण्डोत्पादककारणसामग्रीनियमाच्च स्वविषये सर्वत्र समवयन्ति नान्यत्रेति । एतदुक्तम्भवति । सास्नादिसंस्थानविशेषो गोत्वस्य व्यञ्जकः केसरादिसंस्थानविशेषोऽश्वत्वस्य विशिष्टग्रीवादिसंस्थानविशेषो घटत्वस्य प्रतीतिनियमात् । एते च संस्थानविशेषा न सर्वेषु पिण्डेषु साधारणा अपि तु प्रतिनियतेषु भवन्ति । तत्र यद्यपि सर्वं सामान्यं सर्वत्रोपजायमानेन स्वविषयेणैव पिण्डान्तरेणापि सम्बद्धुं क्षमते तथापि यस्याभिव्यञ्जकं यत्र पिण्डे सम्भवति तस्य तत्रैव समवायो नान्यत्र । एवं सामग्र्या नियमादपि सामान्यसम्बन्धनियमः । एष हि तन्त्वादीनां कारणानां स्वभावो यदेतैरुत्पद्यमाने द्रव्ये पटत्वमेव समवैति नान्यत् एष हि मृत्पिण्डादीनां महिमा यत्तैः क्रियमाणे द्रव्ये घटत्वमेव समवैति नान्यत् न तावत् सामान्यमन्यतो गत्वान्यत्र(१) सम्बध्यते निष्क्रियत्वात् । तत्रापि यदि पूर्वं नासीत् तत्रोपजायमानेन पिण्डेनास्य सम्बन्धो न स्यात् दृश्यते च सर्वत्रोपजायमानेन पिण्डेन सम्बन्धः तस्मात् सर्वं सर्वत्रास्तीति कस्य चिन्मतं तन्निराकुर्वन्नाह । अन्तराले संयोगसमवायवृत्त्यभावा(२)दव्यपदेश्यानीति । अन्तरालमिति आकाशं वा दिग्द्रव्यं वा स्तिमितवेगमूर्तद्रव्याभावो(३) वा तेषु गोत्वादिसामान्यानां न संयोगो नापि समवायः । न चासम्बद्धानामेव तेषामवस्थाने प्रमाणमस्ति अतोन्तराले न सामान्यानि व्यपदिश्यन्ते न सन्तीत्यर्थः । कथं तर्हि तत्रोपजायमानेन पिण्डेन सम्बध्यन्ते कारणसामर्थ्यात् । संयोगो ह्यन्यतः समागतस्य भवति तत्रैवावस्थितस्य वा भवति तस्माद्विलक्षणस्तु समवायो यत्र यत्रैव पिण्डोत्पत्तौ कारणानि व्याप्रियन्ते तत्र तत्रैव कारणानां सामर्थ्यात् पिण्डेऽन्यतोनागतस्य तत्रास्थितस्यापि सामान्यस्य भवति वस्तुशक्तेरपर्यनुयोज्यत्वात् ॥

अत्राहुः सौगताः । प्रतीयमानेषु भेदेषु मणिसूत्रवदेकस्याकारस्यानुपलम्भात् सामान्यं नास्त्येवेति । तदयुक्तम् । अनेकासु गोव्यक्तिष्वनुभूयमानास्वश्वादिव्यक्तिविलक्षणतया सामान्याकारप्रतीतिसम्भवात् । यदि शाब-

(१) अन्यतः समागत्य सम्बध्यते–पा· ३ पु· । (२) समवायाभावा–पा· १ पु· ।
(३) स्तिमितवायुर्वा मूर्तद्रव्याभावो–पा· ३ पु· ।

लेयादिषु परस्परभिन्नेष्वेकमनुवृत्तं न किञ्चिदस्ति यथा गवाश्वव्यक्तयः परस्परविलक्षणाः संवेद्यन्ते तथा गो व्यक्तयोऽपि संवेद्याः स्युः(१) यथा वा गोव्यक्तयः सरूपाः प्रतीयन्ते तथा गवाश्वव्यक्तयोपि प्रतीयेरन् विशेषाभावात्। नियमेन तु गोव्यक्तयः प्रतीयमानाः सरूपाः स्ववर्गसाधारणमश्वादिव्यावृत्तं किञ्चिदेकं रूपमाक्षिपति एकार्थक्रियाकारित्वादेकहेतुत्वाच्च। गोव्यक्तीनामेकत्वमिति चेत् नासति सामान्ये व्यक्तीनामिव व्यक्तिहेतूनां व्यक्तिकार्याणामपि परस्परव्यावृत्तानामेकत्वादसम्भवात्। किं च यद्येकहेतुत्वादेकत्वं भिन्नकारण(२)प्रभवाणां व्यक्तीनामेकत्वं न स्यात् दृश्यते चाभिन्नस्वभावानामपि कारणभेदो यथा वह्नेर्दारुनिर्मथनाद्विद्युत आदित्यगभस्तिक्षोभितात् सूर्यकान्तादपि मणेरुत्पत्तिः। एककार्यत्वादेकत्वे च विजातीयानामप्येकत्वापत्तिः दृष्टाहि वाहदोहादिक्रिया गवादिव्यक्तीनामिव महिष्यादिव्यक्तीनामपि या च गौर्न दुह्यते न च वाह्यते स गौर्न स्यात्। अपि च सामान्याभावे कोऽर्थः शब्दसंसर्गविषयः न तावत् स्वलक्षणं तस्य क्षणिकस्य सर्वतो व्यावृत्तस्य सङ्केतविषयत्वाभावात्। नापि विकल्पः शब्दार्थः तस्य क्षणिकत्वादसाधारणत्वाच्च। विकल्पाकारः शब्दार्थ इति चेत् किं विकल्पाकारो विकल्पव्यतिरिक्तः अव्यतिरिक्तो वा यदि भिन्नः स किं सर्वत्र(३)विकल्पसाधारणः किं वा प्रतिविकल्पं भिद्यते साधारणत्वे तावदेतस्य सामान्यादभेदः यदि परं तव ज्ञानधर्मोऽयमस्माकं चार्थधर्म इति वहिर्मुखतया प्रतीयमानत्वादिति कश्चिद्विशेषः। यदि व्यतिरिक्तोयमाकारः प्रतिज्ञानं भिद्यते अथवा ज्ञानादव्यतिरिक्त एव उभयथापि न शब्दसंसर्गयोग्यताज्ञानवदशक्यसङ्केतत्वात् विकल्पः पारम्पर्येण तदुत्पत्तिप्रतिबन्धाद्बाह्यात्मतया स्वाकारमारोप्य विकल्पयति। तत्रायं शब्दसंसर्ग इति चेत् वाह्यत्वेनारोपितो विकल्पाकार एकाधीनस्वभावत्वा(४)द्विकल्पे जायमाने जायमान इव विनश्यति विनश्यन्निव प्रतीयमानः प्रतिविकल्पं भिन्न एवावतिष्ठते। न च भेदानुपातिनिसङ्केतप्रवृत्तिरित्युक्तम्। अत्रोच्यते। यादृशमेको गोविकल्पे बाह्यात्मतया स्वप्रतिभासमारोपयति गोविकल्पान्तरमपि तादृशमेवारोपयति विकल्पाश्च प्रत्येकं स्वाकारमात्रग्राहिणो

---

(१) यथा गवाश्वव्यक्तयः सरूपाः प्रतीयन्ते तथा गवाश्वव्यक्तयोऽपि संवेद्येरन्—पा॰ २ पु॰।
(२) भिन्नाकार—पा॰ १ पु॰।
(३) सर्व—पा॰ २ पु॰।
(४) विकल्पैकाधीनस्वभावत्वा—पा॰ ३ पु॰।

न परस्परारोपितानामाकाराणां भेदग्रहणाय पर्य्याप्नुवन्ति । तस्योभयग्रहणाधीनत्वात् तदग्रहणाच्च विकल्पारोपितानामाकाराणामेकत्वमारोप्य विकल्पानामेको विषय इत्युच्यते तदेव च सामान्यं बहिरारोपितेभ्यो विकल्पाकारेभ्योऽत्यन्तभेदाभावेनाभावरूपम् स्वलक्षणज्ञानतदाकारारोपितैश्चतुर्भिः सहाभिः समस्याद्रूपञ्चमाकार इत्युच्यमानमारोपितबाह्यत्वं शब्दाभिधेयं शब्दसंसर्गविषयः तदध्यवसाय एव स्वलक्षणाध्यवसायः तदात्मतया तस्य समारोपात् अन्यव्यावृत्तिस्वभावं भावाभावसाधारणं चेदं गौरस्ति नास्तीति प्रयोगात् भावात्मकत्वे ह्यस्य गौरस्तीति प्रयोगासम्भवः पुनरुक्तत्वात् नास्तीति च न प्रयुज्यते विरोधात् एवं तस्याभावात्मकत्वे नास्तीति पुनरुक्तं अस्तीति विरुध्यते । यथोक्तम् ।

घटो नास्तीति(१) वक्तव्यं सन्नेव हि यतो घटः ।
नास्तीत्यपि न वक्तव्यं विरोधात् सदसत्वयोः ॥ इति ।

एतस्मादेव च भिन्नानामपि व्यक्तीनामेकतावभासः । इदं हि सर्वेषामेव विकल्पानां विषयोऽस्यैकत्वाद्विकल्पानामप्येकत्वं तेषामेकत्वात् तत्कारणानां प्रतिपिण्डभाविनां निर्विकल्पकानामप्येकत्वं तेषामेकत्वाच्च तत्कारणानां व्यक्तीनामेकत्वावगमः । यथोक्तम् ॥

एकप्रत्यवमर्षस्य हेतुत्वाद्धीरभेदिनी ।
एकधीहेतुभावेन व्यक्तीनामप्यभिन्नता ॥ इति ।

एतदप्ययुक्तम् । विकल्पानुपपत्तेः विकल्पाकाराण भेदाग्रहणादारोपित(२)मैक्यम् सामान्यमाचक्षते भिक्षवः । अत्र ब्रूमः । किमाकाराणां भेदाग्रहणमेवाभेदसमारोपः आहोस्विदभेदग्रहणमभेदारोपः । न तावदाद्यः कल्पः भेदसमारोपितस्यापि प्रसङ्गात् । यथा विकल्पाकाराणां भेदो न गृह्यते तद्वदभेदोऽपि न गृह्यते तत्र भेदाग्रहणादभेदारोपवदभेदाग्रहणाद्भेदारोपस्यापि प्रसक्तावभेदोचितव्यवहारप्रवृत्त्ययोगात् । अभेदग्रहणमभेदारोप इत्यपि न युक्तम् अभावादेको ह्यनेकदर्शी तेषां भेदाभेदौ प्रत्येति नैरात्म्यवादे तु एकोनेकार्थद्रष्टा न कश्चिदस्ति विकल्पानां प्रत्येकं स्वाकारमात्रनियतत्वात् । अस्तु वाऽनेकार्थदर्शी कश्चिदेकस्तथाप्येकं निमित्तमन्तरेण भिन्नेष्वाकारेषु नाभेदग्रह-

(१) घटोऽस्तीति न वक्तव्यं-पा० ३ पु० ।　　(२) भेदाग्रहणमारोपित-पा० ४ पा० ।

णमस्ति भवद्वा गवाश्वमहिषाद्याकारेष्वपि भवेदविशेषात् गवाकारेष्वप्यगो-व्यावृत्तिरेकं निमित्तमस्तीति चेत् के पुनरगावो यद्व्यावृत्त्या गवाकारेष्वेकत्व-मारोप्यते । ये गावो न भवन्ति ते ऽगाव इति चेत् गावः के ते ये ऽगावो न भवन्तीति चेत् गवाश्वस्वरूपे निरूपिते तद्व्यावृतत्वेनागवां स्वरूपं निरूप्यते अगवां स्वरूपे निरूपिते तद्व्यावृत्त्या गवां स्वरूपनिरूपणमित्येकाप्रतिपत्ताविं-तराप्रतिपत्तेरुभयाप्रतिपत्तिः । यथाह तत्रभवान् ।

सिद्धश्च गौरपोह्येत गोनिषेधात्मकश्च सः ।
तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते ॥
गव्यसिद्धे त्वगौर्नास्ति तदभावे तु गौः कुतः ॥ इति ।

अथान्यापोहः शब्दार्थोऽनारोपितबाह्यत्वम् तथाप्युच्यते । कोऽयमपोहो नाम किमगौरपोहो भावोऽभावो वा । यदि भावः स किं गोपिण्डस्वभावोऽथागो-पिण्डात्मकः गोपिण्डात्मकत्वे तावदस्यासाधारणता न चासाधारणात्मके ऽर्थे शब्दप्रवृत्तिरित्युक्तम् । अगोपिण्डात्मकेऽप्ययमेव दोषो दूषणान्तरं चैतदधिकम् । यद्गोशब्दस्य गौरित्ययमर्थो न प्राप्नोति(१) यदि तु पिण्डव्यतिरिक्तमनेकसाधा-रणं वस्तुभूतमपोहतत्त्वमिष्यते शब्दमात्रविषया विप्रतिपत्तिः । अथापोहोऽन्य-व्यावृत्तिरूपत्वादभावस्वभाव इष्यते(२) तदास्य प्रत्य यत्वेन ग्रहणं न स्यात् ज्ञानजनकस्यैव ग्राह्य(३)लक्षणत्वात् अभावस्य च समस्तार्थक्रियाविरहलक्षण-त्वात् । न च प्रत्यक्षागृहीतेऽर्थे सङ्केतग्रहणमस्तीत्यभावे शब्दस्याप्रवृत्तिरेव न च तस्मिन् प्रतीयमाने श्रोतुरर्थविषया प्रवृत्तिः स्यात् भावाभावयोर-न्यत्वादसम्बन्धाच्च । स्वलक्षणात्मकत्वेनाभावप्रतीतावविवेकेन स्वलक्षणे प्रवृत्तिरिति चेत्(४) दृश्यविकल्प्यावर्थावेकीकृत्यातत्सन्निवेशिभ्यो भ्रान्त्या प्रतिपत्तिः(५) प्रतिपत्तॄणामिति । तदयुक्तम् । अप्रतीते तदात्मकतया अभावसमारोपानुपपत्तेः । न च श्रोतुस्तदानीमर्थप्रतिपत्तिरस्ति शब्दस्यात-द्विषयत्वात् प्रमाणान्तरस्याभावात् । अस्ति च शब्दादर्थे प्रवृत्ति(६)स्तस्मा-न्नाभावोऽपि शब्दार्थः । न चान्यदेकं निमित्तं किञ्चिदस्ति सर्वमिदमर्थजातं

(१) अगौरित्ययमर्थः प्राप्नोति–पा० ३ पु० ।
(२) अभाव इष्यते–पा० १ पु० ।
(३) ज्ञान–पा० ४ पु० ।
(४) यथोक्तम्–इत्यधिकम् ३ पु० ।
(५) प्रवृत्तिः–पा० ३ पु० ।
(६) प्रतिपत्तिः–पा० ३ पु० ।

परस्परव्यावृत्तं प्रतिक्षणमपूर्वमपूर्वमनुभूयमानं न शब्दात् प्रतीयते नापि प्रत्यक्षाप्रतीतमपि हानोपादानविषयो भवेत् अपरिज्ञातसामर्थ्यत्वात् । अस्ति च शाब्दो व्यवहारः अस्ति च प्राणभृन्मात्रानुवर्तिनी[1] प्रत्यक्षपूर्विका हिताहितप्राप्तिपरिहारार्था लोकयात्रा सैव च भिन्नासु व्यक्तिषु सामान्यमेकं व्यवस्थापयति यद्विषया शब्दात् प्रत्यया[2]श्चोपलभ्यन्ते तज्जातीयत्वेन सदर्थक्रियोपयोग्यतां[3] विनिश्चित्यापूर्वावगतेऽप्यर्थे लोकः प्रवर्तते इति ॥

भिन्नेष्वनुगताकारा बुद्धिर्जातिर्निबन्धना ।
अस्या अभावे नैवेयं लोकयात्रा प्रवर्तते ॥ इति ।

इति भट्टश्रीश्रीधरविरचितायां पदार्थप्रवेश[4]न्यायकन्दलीटीकायां सामान्यपदार्थः समाप्तः ॥

---

## अथ विशेषपदार्थनिरूपणम् ।

अन्तेषु भवा[5] अन्त्याः स्वाश्रयविशेषकत्वाद्विशेषाः । विनाशारम्भरहितेषु नित्यद्रव्येष्वण्वाकाशकालदिगात्ममनस्सु प्रतिद्रव्यमेकैकशो वर्तमानाः अत्यन्तव्यावृत्तिबुद्धिहेतवः[6]। यथास्मदादीनां गवादिष्वश्वादिभ्यस्तुल्याकृतिगुणक्रियावयवसंयोगनिमित्ता प्रत्ययव्यावृत्तिर्दृष्टा गौः शुक्लः शीघ्रगतिः पीनककुद्मान्[7] महाघण्ट इति। तथास्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्ममनस्सु च अन्यनिमित्तासम्भवाद् येभ्यो निमित्तेभ्यः प्रत्याधारं विलक्षणोऽयं विलक्षणोऽय[8]मिति प्रत्ययव्यावृत्तिः

---

(१) अनुबन्धिनी-पा· ३ पु· ।
(२) प्रवृत्तयः-पा· २ पु· ।
(३) क्रियायोग्यतां-पा· ३ पु· ।
(४) प्रवेशक-पा· ३ पु· ।
(५) अन्ते भवाः-पा· ६ पु· ।
(६) विशेषा-इत्यधिकं ५ पु· ।
(७) पीन-इति नास्ति १ पु· ।
(८) प्रत्याधारमयमस्माद्विलक्षणोऽयं-पा· ५ पु· ।

देशकालविप्रकर्षे(१) च परमाणौ स एवायमिति प्रत्यभिज्ञानं च भवति तेऽन्त्या(२) विशेषाः। यदि(३) पुन(४)रन्त्यविशेषमन्तरेण योगिनां योगजाद्धर्मात् प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं च स्यात् ततः किं स्यान्नैवं भवति(५)। यथा न योगजाद्धर्मादशुक्ले शुक्लप्रत्ययः सञ्जायते अत्यन्तादृष्टे च(६) प्रत्यभिज्ञानम्। यदि स्यान्मिथ्या भवेत्(७) तथेहाप्यन्त्यविशेषमन्तरेण योगिनां न योगजाद्धर्मात् प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं वा भवितुमर्हति(८)। अथान्त्यविशेषेष्विव परमाणुषु कस्मान्न स्वतः प्रत्ययव्यावृत्तिः कल्प्यते इति चेन्न तादात्म्यात्। इहातदात्मकेष्वन्यनिमित्तः प्रत्ययो भवति यथा घटादिषु प्रदीपात् न तु प्रदीपे प्रदीपान्तरात्। यथा गवाश्वमांसादीनां स्वत एवाशुचित्वं तद्योगादन्येषां तथेहापि तादात्म्यादन्त्यविशेषेषु स्वत एव प्रत्ययव्यावृत्तिः तद्योगात् परमाण्वादिष्विति ॥

इति प्रशस्तपादभाष्ये(९) विशेषपदार्थः समाप्तः ॥

---

चतुर्युगचतुर्विद्याचतुर्वर्णविधायिने।
नमः पञ्चत्वशून्याय चतुर्मुखभृते सदा ॥

---

(१) विप्रकृष्टे–पा॰ ६।७ पु॰। (२) भवतीति यतस्तेऽन्त्याः–पा॰ ५ पु॰।
(३) यत्र–पा॰ १ पु॰। (४) योगिनां पुनः–पा॰ १ पु॰।
(५) ततः किं नैवं भवति–पा॰ ५ पु॰। (६) अत्यन्तादृष्टपूर्वे च–पा॰ १ पु॰।
(७) मिथ्याप्रत्ययः स्यात्–पा॰ ५ पु॰। (८) अधिकरोति–पा॰ ६ पु॰।
(९) इति प्रशस्तपादाचार्यविरचिते वैशेषिकभाष्ये–पा॰ ७ पु॰।

विशेषव्याख्यानार्थमाह । अन्तेषु भवा अन्त्या इति । उत्पादविनाशयोरन्ते ऽवस्थितत्वादन्तशब्दवाच्यानि नित्यद्रव्याणि तेषु भवाः स्थिता इत्यर्थः । स्वाश्रयस्य सर्वतो विशेषकत्वाद्भेदकत्वाद्विशेषाः । एतद्विवृणोति । विनाशारम्भरहितेष्वित्यादिना । विनाशारम्भरहितेष्वित्यन्त्यपदस्य विवरणम् । अत्यन्तव्यावृत्तिबुद्धिहेतव इति च स्वाश्रयस्य विशेषकत्वादित्यस्य विवरणम् । प्रतिद्रव्यमेकैकशो वर्तमाना इति । द्रव्यं द्रव्यं प्रत्येकैको विशेषो वर्तत इत्यर्थः । एकेनैव विशेषेण स्वाश्रयस्य व्यावृत्तिसिद्धेरनेकविशेषकल्पनावैयर्थ्यात् । यथा चेदं विशेषाणां लक्षणं भवति तथा पूर्वं व्याख्यातम् । सिद्धे विशेषसद्भावे तेषां लक्षणाभिधानं युक्तं नासिद्धे इत्याशङ्क्य विशेषाणां सद्भावं प्रतिपादयितुं ग्रन्थमवतारयति । यथेत्यादिना । यथा गवादिष्वश्वादिभ्यस्तुल्याकृतिनिमित्ता गौरिति गुणनिमित्ता शुक्ल इति क्रियानिमित्ता शीघ्रगतिरिति अवयवनिमित्ता पीनककुद्मानिति संयोगनिमित्ता महाघण्ट इति अस्मदादीनां प्रत्ययव्यावृत्तिर्दृष्टा । तथास्मद्विशिष्टानां योगिनां तुल्याकृतिगुणक्रियेषु तुल्याकृतिषु तुल्यगुणेषु तुल्यक्रियेषु परमाणुषु मुक्तात्ममनस्सु चान्यनिमित्तासम्भवा(¹)द्येभ्यो निमित्तेभ्यः प्रत्याधारमयमस्माद्विलक्षण इति प्रत्ययव्यावृत्तिर्भवति तेऽन्त्या विशेषाः । यथास्मदादीनां गवादिव्यक्तिषु प्रत्ययभेदो भवति तथा परमाण्वादिष्वपि तद्दर्शिनां परस्परापेक्षया प्रत्ययभेदेन भवितव्यं व्यक्तिभेदसम्भवात् । न चास्य व्यक्तिभेद एव निमित्तम् । तदुपलम्भेऽपि स्थाण्वादिषु संशयदर्शनात् । निमित्तान्तरं च नास्ति आकृतेर्गुणस्य क्रियायाश्च तुल्यत्वात् । न च निर्निमित्तः प्रत्ययभेदो दृष्टः तस्माद्यदस्य निमित्तं स विशेष इति । देशविप्रकर्षेण कालविप्रकर्षेण च दृष्टाः परमाणवः कस्यचित्प्रत्यभिज्ञाविषयाः सामान्यविशेषवत्त्वात् घटादिवत् । न च पूर्वदृष्टेऽर्थे प्रत्यभिज्ञानं(²)विशेषावगतिमन्तरेण भवति अतोऽस्ति तस्य निमित्तं विशेषः । अत्र चोदयति । यदि पुनरिति । यथा योगजधर्मसामर्थ्याद्योगिनामतीन्द्रियार्थदर्शनं भवति तथा विशेषमन्तरेणैव प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं च भविष्यतीति चोदनार्थः । समाधत्ते नैवमिति । यथा योगिनामशुक्ले शुक्लप्रत्ययो न भवति अत्यन्तादृष्टे च प्रत्यभिज्ञानं न स्यात् यदि स्यात् मिथ्याप्रत्ययो भवेत् । तथा अन्त्यविशेषमन्तरेण प्रत्ययव्यावृत्तिः

(१) कन्यनिमित्तस्याभावा-पा· ३ । ४ पु·

(२) प्रत्यभिज्ञाज्ञानं-पा· ४ पु· ।

प्रत्यभिज्ञानं च न भवितुमर्हति योगजाद्धर्मादतीन्द्रियार्थदर्शनं न पुनरस्मान्निर्निमित्त एव प्रत्ययो भविष्यतीत्यभिप्रायः। पुनश्चोदयति। अथान्त्यविशेषेष्विति। न तावदन्त्यविशेषेष्वपि विशेषान्तरसम्भवोऽनवस्थानात्। यथा च तेषु विशेषान्तरमन्तरेण स्वत एव प्रत्ययव्यावृत्तिर्भवति योगिनाम् तथा परमाणुष्वपि भविष्यति किं विशेषकल्पनयेत्यत्रोत्तरमाह। नेति। यत्त्वयोक्तं तन्न कुतस्तादात्म्यात्। एतदेव विवृणोति। इहेति। अतदात्मकेष्वन्यनिमित्तः प्रत्ययो भवति न तदात्मकेषु यथा घटादिष्वप्रकाशस्वभावेषु प्रदीपादेः प्रकाशस्वभावात् प्रकाशो भवति न तु प्रदीपे प्रदीपान्तरात् प्रकाशः किं तु स्वत एव। यथा गवाश्वमांसादीनां स्वत एवाशुचित्वं स्पष्टुः प्रत्यवायकरत्वं तद्योगात् तत्सम्बन्धादन्येषामशुचित्वम् तथेहापि तादात्म्यादत्यन्तव्यावृत्तिस्वभावत्वा(१)दन्त्यविशेषेषु स्वत एव स्वरूपादेव प्रत्ययव्यावृत्तिर्न विशेषान्तरसम्भवात्। अतदात्मकेषु तु परमाणुषु सामान्यधर्मकेषु(२) विशेषयोगादेव प्रत्ययव्यावृत्तिर्युक्ता न स्वरूपमात्रादिति ॥

नित्यद्रव्येषु सर्वेषु परस्परसधर्मसु।
प्रत्येकमनुवर्तन्ते विशेषा भेदहेतवः ॥

इति भट्टश्रीश्रीधरकृतायां पदार्थप्रवेश(३)न्यायकन्दलीटीकायां
विशेषपदार्थः समाप्तः ॥

---

## अथ समवायपदार्थनिरूपणम्।

**अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवायः। द्रव्यगुणकर्मसामान्यविशेषाणां कार्यकारणभूतानामकार्यकारणभूतानां वायुतसिद्धानामाधार्याधारभावेनावस्थितानामिहेदमितिबुद्धिर्यतो भवति यतश्चासर्वगताना(४)मधिगतान्य-**

(१) स्वभावात्-पा० ३ पु०। (२) साधारणधर्मकेषु-पा० ३ पु०।
(३) प्रवेशक-पा० ३ पु०। (४) यतश्च सर्वगतानां-पा० ६ पु०।

**त्वानामविष्वग्भावः[1] स समवायाख्यः सम्बन्धः। कथम् यथेह कुण्डे दधीतिप्रत्ययः सम्बन्धे सति दृष्टस्तथेह तन्तुषु पटः इह वीरणेषु कटः इह द्रव्ये गुणकर्मणी[2] इह द्रव्यगुणकर्मसु सत्ता इह द्रव्ये द्रव्यत्वम् इह गुणे गुणत्वम् इह कर्मणि कर्मत्वम् इह नित्यद्रव्ये ऽन्त्या विशेषा इतिप्रत्ययदर्शनादस्त्येषां सम्बन्ध इति ज्ञायते ॥**

अन्तर्ध्वान्तभिदे[3] विश्वसंहारोत्पत्तिहेतवे ।
निर्मलज्ञानदेहाय नमः सोमाय शम्भवे ॥

समवायनिरूपणार्थमाह । अयुतसिद्धानामाधार्याधारभूतानां कार्यकारणभूतानामकार्यकारणभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवायः । तदेतत्कृतव्याख्यानमुद्देशावसरे । के ते अयुतसिद्धा येषां सम्बन्धः समवायो भवेदत आह । द्रव्यगुणकर्मसामान्यविशेषाणामिति । कार्यकारणभूतानामकार्यकारणभूतानामिति नियमकथनम्[4] । अवयवावयविनामनित्यद्रव्यतद्गुणानां नित्यद्रव्यतत्समवेतानामनित्यगुणानां कर्मतद्वतां कार्यकारणभूतानां समवायः नित्यद्रव्यतद्गुणानां सामान्यतद्वतामन्त्यविशेषतद्वतां चाकार्यकारणभूतानां समवायोऽयुतसिद्धानामिति नियमः । एवमाधार्याधारभावेनावस्थितानामित्यपि नियम एव । इहेदमितिबुद्धिर्यतः कारणाद्भवति यतश्चासर्वगतानां नियतदेशावस्थितानामधिगतान्यत्वानामधिगतस्वरूपभेदानामविष्वग्भावोऽपृथग्भावोऽस्वातन्त्र्यं स समवायः भिन्नयोः परस्परोपश्लेषस्य सम्बन्धकृतत्वोपलम्भात् । एतदेव कथमित्यादिना प्रश्नपूर्वकमुपपादयति । यथा इह कुण्डे दधीतिप्रत्ययः कुण्डदध्नोः सम्बन्धे सति दृष्टः । तथेह तन्तुषु पट इत्यादिप्रत्ययानां दर्शनादस्त्येषां तन्तुपटादीनां सम्बन्ध इति ज्ञायते । इह तन्तुषु पट इत्यादिप्रत्ययाः सम्बन्धनिमित्तकाः अवधारितप्रत्ययत्वात्[5] इह कुण्डे दधीतिप्रत्ययवत् ॥

---

(१) अविश्वग्भावः–पा· क्वचित् । (२) इह द्रव्ये द्रव्यगुणकर्माणि–पा· ६ पु· ।
(३) महामोहभिदे–पा· २ पु· । तुभ्यं भयभिदे–पा· ३ पु· ।
(४) अनियमकथनम्–पा· ४ पु· । (५) अबाधितेहप्रत्ययत्वात्–पा· ३ पु· ।

**न चासौ संयोगः सम्बन्धिनामयुतसिद्धत्वात् अन्यतरकर्मादिनिमित्तासम्भवात्(१) विभागान्तत्वादर्शनादधिकरणाधिकर्तव्ययोरेव भावादिति ॥**

नन्वयं संयोगो भविष्यतीत्यत आह । न चासौ संयोग इति । असौ तन्तुपटादीनां सम्बन्धो न संयोगो भवति कुत इत्यत्राह । सम्बन्धिनामयुतसिद्धत्वादिति । संयोगो हि युतसिद्धानामेव भवति । अयं त्वयुतसिद्धानामिति। तथा संयोगोऽन्यतरकर्मज उभयकर्मजः संयोगजो वा स्यादिति। इह तु अन्यतरकर्मादीनां निमित्तानामभावो भावोत्पादककारणसामर्थ्यभावित्वात्। संयोगस्य विभागान्तत्वं विभागविनाश्यत्वं दृश्यते न समवायस्य संयोगः स्वतन्त्रयोरपि भवति यथोर्ध्वावस्थितयोरङ्गुल्योः अयं त्वधिकरणाधिकर्तव्ययोरेव भवति तस्मान्नायं संयोगः किं तु तस्मात् पृथगेव ॥

**स च द्रव्यादिभ्यः पदार्थान्तरं भाववल्लक्षणभेदात् । यथा भावस्य द्रव्यत्वादीनां स्वाधारेषु आत्मानुरूप(२)प्रत्ययकर्तृत्वात् स्वाश्रयादिभ्यः परस्परतश्चार्थान्तरभावः तथा समवायस्यापि पञ्चसु पदार्थेष्विहेतिप्रत्ययदर्शनात् तेभ्यः पदार्थान्तरत्वमिति । न च संयोगवन्नानात्वं भाववल्लिङ्गाविशेषात् विशेषलिङ्गाभावाच्च तस्माद्भाववत्सर्वत्रैकः समवाय इति ॥**

एवं स्थिते समवाये तस्य द्रव्यादिभ्यो भेदं प्रतिपादयति । स च द्रव्यादिभ्यः पदार्थान्तरमिति । कुत इत्यत आह । भाववल्लक्षणभेदादिति। एतद्विवृणोति । यथेति । भाव इति सत्तासामान्यमुच्यते । द्रव्यत्वादीत्यादिपदेन गुणत्वादिपरिग्रहः । यथा भावस्य स्वाधारेषु द्रव्यगुणकर्मसु आत्मानुरूपः प्रत्ययः सत्सदितिप्रत्ययः द्रव्यत्वस्य स्वाश्रयेषु द्रव्येष्वात्मानुरूपः प्रत्ययः द्रव्यं द्रव्यमितिप्रत्ययः गुणत्वस्य स्वाश्रयेषु गुणेष्वात्मानुरूपः प्रत्ययो गुणो गुण इतिप्रत्ययः कर्मत्वस्य स्वाश्रयेषु कर्मसु आत्मानुरूपः

(१) कर्मादिनिमित्तप्रतीत्यभावात्–पा० ६ पु० । अन्यतरकर्मजत्वादि–पा० ९ पु० ।
(२) अर्थानुरूप–पा० ६ पु० ।

प्रत्ययः कर्म कर्मेतिप्रत्ययः तस्य कर्तृत्वाद् भावद्रव्यत्वादीनां स्वाश्रया-दिभ्यः परस्परतश्चार्थान्तरभावः तथा समवायस्यापि पञ्चसु पदार्थेष्विहेति-प्रत्ययदर्शनात् तेभ्यः पञ्चभ्यः पदार्थान्तरत्वम्। किमयमेक आहोस्विदनेक इत्यत्राह। न च संयोगवन्नानात्वमिति। यथा संयोगो नाना नैवं समवायः। कुत इत्यत्राह । भाववल्लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च । यथा सत्सदिति-ज्ञानस्य लक्षणस्य सर्वत्राविशेषादवैलक्षण्याद्विशेषे भेदे लक्षणस्य प्रमाणस्या-भावाच्च सर्वत्रैको भावः तद्वदिहेतिप्रत्ययस्य लक्षणस्य सर्वत्रावैलक्षण्याद्भेदे प्रमाणाभावाच्च सर्वत्रैकः समवाय इति । उपसंहरति। तस्मादिति ॥

**ननु(१) यद्येकः समवायो द्रव्यगुणकर्मणां द्रव्यत्वगुणत्वकर्मत्वादिविशेषणैः सह सम्बन्धैकत्वात् पदार्थसङ्कर(२)प्रसङ्ग इति न आधाराधेयनियमात् । यद्यप्येकः समवायः सर्वत्र स्वतन्त्रः तथाप्याधाराधेय-नियमोऽस्ति । कथम् द्रव्येष्वेव द्रव्यत्वं गुणेष्वेव गुणत्वं कर्मस्वेव कर्मत्वमिति। एवमादि कस्मादन्वयव्यतिरेकदर्शनात्। इहेतिसमवायनिमित्तस्य ज्ञानस्यान्वयदर्शनात् सर्वत्रैकः समवाय इति गम्यते । द्रव्यत्वादिनिमित्तानां व्यतिरेकदर्शनात् प्रतिनियमो ज्ञायते। यथा कुण्डदध्नोः संयोगैकत्वे भवत्याश्रयाश्रयिभाव-नियमः । तथा द्रव्यत्वादीनामपि समवायैकत्वेपि व्यङ्ग्यव्यञ्जकशक्तिभेदादाधाराधेयनियम इति ॥**

चोदयति। यद्येक इति। समवायस्यैकत्वे य एव द्रव्यत्वस्य पृथिव्यादिषु योगः स एव गुणत्वस्य गुणेषु कर्मत्वस्य च कर्मसु तत्र यथा द्रव्यत्वस्य योगः पृथिव्यादिष्वस्तीति तेषां द्रव्यत्वम् तथा तद्योगस्य गुणादिष्वपि सम्भवात् तेषा-मपि द्रव्यत्वम्। यथा च गुणत्वस्य योगो रूपादिष्वस्तीति रूपादीनां गुणत्वम् तथा तद्योगस्य द्रव्यकर्मणोरपि भावात् तयोरपि गुणत्वं स्यात्। एवं च कर्मस्वपि

(१) ननु-इति नास्ति ६ पु॰ । (२) पदार्थधर्मसङ्कर-पा॰ १ पु॰ ।

पदार्थानां सङ्कीर्णता दर्शयितव्या। समाधत्ते नेति। न च पदार्थानां सङ्कीर्णता कुतः आधाराधेयनियमात्। न समवायसद्भावमात्रेण द्रव्यत्वम् किन्तु द्रव्यसमवायाद् द्रव्यत्वं समवायश्च द्रव्ये एव न गुणकर्मसु अतो न तेषां द्रव्यत्वम्। एवं गुणकर्मस्वपि व्याख्येयम्। एतत्सङ्ग्रहवाक्यं विवृणोति। यद्यप्येकः समवाय इत्यादिना। स्वतन्त्रः संयोगवत् सम्बन्धान्तरेण न वर्तत इत्यर्थः। व्यक्तमपरम्। पुनश्चोदयति। एवमादि कस्मादिति। द्रव्येष्वेव द्रव्यत्वं वर्तते गुणेष्वेव गुणत्वं कर्मस्वेव कर्मत्वमित्येवमादि कस्मात् त्वया ज्ञातमित्यर्थः। उत्तरमाह। अन्वयव्यतिरेकदर्शनादिति। द्रव्यत्वनिमित्तस्य प्रत्ययस्य द्रव्येष्वन्वयो गुणकर्मभ्यश्च व्यतिरेकः गुणत्वनिमित्तस्य प्रत्ययस्य गुणेष्वन्वयो द्रव्यकर्मभ्यश्च व्यतिरेकः तथा कर्मत्वनिमित्तस्य प्रत्ययस्य कर्मस्वन्वयो द्रव्यगुणेभ्यश्च व्यतिरेको दृश्यते तस्मादन्वयव्यतिरेकदर्शनाद् द्रव्यत्वादीनां नियमो ज्ञायते। अस्य विवरणं सुगमम्। समवायाविशेषे कुत एवायं नियमः द्रव्यत्वस्य पृथिव्यादिष्वेव समवायो गुणत्वस्य रूपादिष्वेव कर्मत्वस्योत्क्षेपणादिष्वेव नान्यत्रेत्यत आह। यथेति। संयोगस्यैकत्वेऽपि कुण्डदध्नोराश्रयाश्रयिभावस्य नियमो दृष्टः शक्तिनियमात्। कुण्डमेवाश्रयो दध्येवाश्रयि। एवं समवायैकत्वेपि द्रव्यत्वादीनामाधाराधेयनियमो व्यङ्ग्यव्यञ्जकशक्तिभेदात्। किमुक्तं स्यात्? द्रव्यत्वाभिव्यञ्जिका शक्तिर्द्रव्याणामेव तेन द्रव्येष्वेव द्रव्यत्वं समवैति नान्यत्रेति। एवं गुणकर्मस्वपि व्याख्येयम्॥

**सम्बन्ध्यनित्यत्वेऽपि न संयोगवदनित्यत्वं भाववदकारणत्वात्। यथा प्रमाणतः कारणानुपलब्धेर्नित्यो भाव इत्युक्तम् तथा समवायोऽपीति। न ह्यस्य किञ्चित् कारणं प्रमाणत उपलभ्यते इति। कया पुनर्वृत्त्या द्रव्यादिषु समवायो वर्तते। न संयोगः सम्भवति तस्य गुणत्वेन द्रव्याश्रितत्वात्। नापि समवायस्तस्यैकत्वात् न चान्या वृत्तिरस्तीति। न। तादात्म्यात्। यथा द्रव्यगुणकर्मणां सदात्मकस्य भावस्य नान्यः सत्तायोगोऽस्ति। एवमविभागिनो वृत्त्यात्मकस्य**

समवायस्य नान्या वृत्तिरस्ति तस्मात् स्वात्मवृत्तिः । अत एवातीन्द्रियः सत्तादीनामिव प्रत्यक्षेषु वृत्त्यभावात् स्वात्मगतसंवेदनाभावाच्च । तस्मादिहबुद्ध्यनुमेयः समवाय इति ॥

इति प्रशस्तपादभाष्ये(१) समवायपदार्थः समाप्तः ॥

---

योगाचारविभूत्या यस्तोषयित्वा महेश्वरम् ।
चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः ॥(२)

इति प्रशस्तपादविरचितं द्रव्यादिषट्पदार्थभाष्यं समाप्तम् ॥

किं पुनरयमनित्य आहोस्विन्नित्य इति संशये सत्याह । सम्बन्ध्यनित्यत्वेऽपीति । यथा सम्बन्धिनोरनित्यत्वे संयोगस्यानित्यत्वं न तथा समवायिनोरनित्यत्वे समवायस्यानित्यत्वं भाववदकारणत्वादिति । एतद्विवृणोति । यथेत्यादिना । युक्तो हि सम्बन्धिविनाशे संयोगस्य विनाशः तदुत्पादे सम्बन्धिनोः समवायिकारणत्वात् । समवायस्य तु सम्बन्धिनो न कारणं सम्बन्धिमात्रत्वात् । यथा न कारणं तथोपपादितम् । तस्मादेतस्य सम्बन्धिविनाशेऽप्यविनाशः । सत्तावदाश्रयान्तरेऽपि प्रत्यभिज्ञायमानत्वात् । कमसम्बद्ध एव समवायः सम्बन्धिनौ सम्बन्धयति सम्बद्धो वा । न तावदसम्बद्धस्य सम्बन्धकत्वं युक्तम् अतिप्रसङ्गात् । सम्बन्धश्चास्य न संयोगरूपः सम्भवति तस्य द्रव्याश्रितत्वात् । नापि समवाय एकत्वात् । न च संयोगसमवायाभ्यां वृत्त्यन्तरमस्ति । तत्कथमस्य वृत्तिरित्यत आह । कया पुनर्वृत्त्या द्रव्यादिषु समवायो वर्तत इति । वृत्त्यभावान्न वर्तत इत्यभिप्रायः । परः समाधत्ते । नेति । वृत्त्यभावान्न वर्तते इत्येतन्न तादात्म्याद् वृत्त्यात्मकत्वात् स्वत एवायं वृत्तिरिति । कृतको हि संयोगः तस्य वृत्त्यात्मकस्यापि वृत्त्यन्तरमस्ति कारणसमवायस्य कार्यलक्षणत्वात् । समवायस्य वृत्त्यन्तरं नास्ति । तस्मादस्य

---

(१) पदार्थोद्देशे-पा० ६ पु० ।   (२) पद्यमिदं ख पुस्तकएवास्ति ॥

स्वात्मना स्वरूपेणैव वृत्तिर्न वृत्यन्तरेणेत्यर्थः । अत एवातीन्द्रियः सत्तादीनामिव प्रत्यक्षेषु वृत्त्यभावात् । यथा सत्तादीनां प्रत्यक्षेष्वर्थेषु वृत्तिरस्ति तेन ते संयुक्तसमवायादिन्द्रियेण गृह्यन्ते नैवं समवायस्य वृत्तिसम्भवः । अतोऽतीन्द्रियोऽयम् । संयोगसमवायापेक्षस्यैवेन्द्रियस्य भावग्रहणसामर्थ्योपलम्भात् । यदि समवायविषयमैन्द्रियकं संवेदनमस्ति सम्बन्धाभावाभिधानं प्रलापः अथ नास्ति तदेव वाच्यमित्यत्राह । स्वात्मगतसंवेदनाभावाच्चेति । यथेन्द्रियेण संयोगप्रतिभासो नैवं समवायप्रतिभासः सम्बन्धिनोः पिण्डीभावोपलम्भात् अतोऽयमप्रत्यक्षः । उपसंहरति । तस्मादिति ॥

परस्परोपसंश्लेषो भिन्नानां यत्कृतो भवेत् ।
समवायः स विज्ञेयः स्वातन्त्र्यप्रतिरोधकः ॥

इति भट्टश्रीश्रीधरकृतायां पदार्थप्रवेश(१)न्यायकन्दलीटीकायां
समवायपदार्थः समाप्तः ॥

सुवर्णमयसंस्थानरम्या सर्वोत्तरस्थितिः ।
सुमेरोः शृङ्गवीथीव टीकेयं न्यायकन्दली ॥
अक्षीणनिजपक्षेषु ख्यापयन्ती गुणानसौ ।
परप्रसिद्धसिद्धान्तान् दलति न्यायकन्दली ॥
आसीद्दक्षिणराढायां द्विजानां भूरिकर्मणाम्(२) ।
भूरिसृष्टिरितिग्रामो भूरिश्रेष्ठि(३)जनाश्रयः ॥
अम्भोराशेरिवैतस्माद्बभूव क्षितिचन्द्रमाः ।
जगदानन्दनो(४)वन्द्यो बृहस्पतिरिव द्विजः(५) ॥
तस्माद्विशुद्धगुणरत्नमहासमुद्रो विद्यालतासमवलम्बनभूरुहोऽभूत् ।
स्वच्छाशयो विविधकीर्तिनदीप्रवाहप्रस्पन्दनोत्तमबलो बलदेवनामा ॥
तस्याभूद्भूरियशसो विशुद्धकुलसम्भवा ।
अब्बोके(६)त्यर्चितगुणा गुणिनो गृहमेधिनी ॥

(१) प्रवेशक- पा॰ ३ पु॰ । (२) पुण्यकर्मणाम्-पा॰ ३ पु॰ ।
(३) भूरिसृष्टि-पा. १ । ३ । ४ पु॰ । (४) जगदानन्दकृद्-पा॰ ३ पु॰
(५) बृहस्पतिरिति द्विजः-पा॰ क्वचित् । (६) अम्भोके-पा॰ ३ पु॰ । अच्छोके-पा॰ २ पु॰ ।

सच्छायः स्थूलफलदो बहुशाखो द्विजाश्रयः ।
तस्यां [1]श्रीधर इत्युच्चैरर्थिकल्पद्रुमोऽभवत्[2] ॥
असौ विद्याविदग्धानामसूत श्रवणोचिताम्[3] ।
षट्पदार्थहितामेतां रुचिरां न्यायकन्दलीम् ॥
त्र्यधिकदशोत्तरनवशतशाकाब्दे न्यायकन्दली रचिता ।
श्रीपाण्डुदासयाचितभट्टश्रीश्रीधरेणेयम् ॥[4]
समाप्तेयं पदार्थप्रवेशन्यायकन्दलीटीका ॥

---

(१) ताभ्यां–पा· ३ पु· । तस्याः–पा· ४ पु· ।
(२) तस्माच्छ्रीधर इत्युच्चैरर्थिकल्पद्रुमादभूत्–पा· २ पु· ।
(३) यद्दशोचिताम्–पा· ४ पु· ।
(४) अत्र पद्यद्वयमधिकं वर्तते काश्मीरदेशीयपुस्तके तद्यथा ।

कणादकृतमूलद्रव्या प्रशस्तभाष्यद्रुमावबद्धा च ।
श्रीधरहृदयोपवने विलसन्ती न्यायकन्दली रम्या ॥
गुरुवररत्नाकरकादधीत्य सम्यग् विवेकेन ।
वर्षे वेदेषुमिते लिखितेयं भट्टनरकेण ॥

समाप्तोऽयं ग्रन्थः ।